## SANSKRIT WORKS PUBLISHED,

IN THE NEW SERIES.

Rs. as.

The Vais'eshika Sútras, with commentaries, by Pandita Jayanáráyana Tarkapanchánana. Complete in V. Fasc. Nos. 4, 5, 6. 8 and 10. ... ... ... ... ... 3 :

The Sándilya Sútras with S'wapnes'wara's commentary, edited by J. R. Ballantyne, L.L. D. Complete in I Fasc. No. 11. 0 1

The Kaushítaki-Bráhmana Upanishad with S'ankaránanda's commentary, edited, with a translation, by E. B Cowell, M. A. Complete in II Fasciculi, Nos. 19 and 20. ... 1

A translation of the Súrya Siddhánta and Siddhánta S'iromani, by Pandita Bápú Deva S'ástri, under the superintendence of the Ven. Archdeacon Pratt. Complete in III Fasc Nos. 1, 13 and 28 ... ... ... .. 1 1

The Kávyádars'a of S'rí Dandin, edited, with a commentary, by Pandita Premachandra Tarkabágís'a. Complete in V Fasciculi Nos. 30, 33, 38, 39 and 41. .. .. . 3

The Brihatsanhitá of Varáha-Mihira, edited by Dr H Kern Complete in VII. Fasciculi. Nos 51, 54, 59, 63, 68, 72 and 73 ... ... . . . .. .. 4

A translation of the Sánkhya Aphorisms of Kapila, by J. R. Ballantyne, L.L D Fasc I and II Nos. 32 and 81.

The Das'a Rúpa, with the exposition of Dhanika edited by F E. Hall, D. C. L Complete in III. Fasc. Nos 12, 24, and 82 . . . .. 1 1

Sánkhya Sara, a treatise on Sankhya Philosophy edited by F E Hall, D C. L. Oxon — No 83 (*out of Print*)

The Narada Pancharatra edited by Rev K M. Banerjea Complete in IV Fasc. Nos 17, 25, 34 and 75. . 2

Nyaya Dars'ana of Gotama, with the commentary of Vatsyáyana edited by Pandita Jayanáráyana Tarkapanchánana Complete in III. Fasc Nos 56, 67 and 70. .. 1 1

---

## SANSKRIT WORKS IN PROGRESS.

The Maitri Upanishad, with the commentary of Rámatírtha edited with an English Translation, by E B. Cowell, M A Fasc I and II Nos 35 and 40

The Mímánsa Dars'ana, with the commentary of Sabara Swámin edited by Pandita Mahes'achandra Nyáyaratna, Fasc I. and II Nos 44, 85

The Taittiriya Áranyaka of the Black Yajur Veda, with the commentary of Sáyanácharya, edited by Bábu Rajendralála Mitra Fasc I. II. III and IV Nos 60. 71 88 and 97

The Sankara Vijaya of Anantánanda Giri edited by Pandita Navadwipachandra Goswami Fasc. I No 46.

The S'rauta Sútra of As'waláyana, with the commentary of Gargya Naráyana Edited by Pandita Ráma Náráyana Vidyáratna Fasc I to X Nos 55, 61, 66, 69, 71, 80, 81, 86, 90 and 93

श्रीगणेशाय नमः ।

# आश्वलायनीये

## गृह्यसूत्रे

### प्रथमोऽध्यायः ।

आश्वलायनमाचार्यं प्रणिपत्य जगद्गुरुम् ।
देवस्वामिप्रसादेन क्रियते वृत्तिरीदृशी ॥

**उक्तानि वैतानिकानि गृह्याणि वक्ष्यामः ॥ १ ॥**

वैतानिकान्युक्तानि । अतः परं गृह्याणि वक्ष्यामः । वितानोऽग्नीनां विस्तारः । तत्र भवानि वैतानिकानि । बह्वग्निसाध्यानि कर्माणीत्यर्थः । गृहनिमित्तोऽग्निर्गृह्यः । तत्र भवानि कर्माण्यपि लक्षणया गृह्याणीत्युच्यन्ते । गृहशब्दो भार्यायां शालायाञ्च वर्तते । तथा 'स गृही गृहमागतः' इत्यत्र हि पूर्वो गृहशब्दो

भार्यावचनः। उत्तरस्तु शालावचनः। येषां भार्यासंयोगादुत्पन्नाग्नौ इमानि कर्माणि प्रवर्तन्ते तेषामयं गृहशब्दो भार्यावचनः। येषान्तु दायविभागकालेऽग्निरुत्पद्यते तेषां शालावचनः। 'भार्यादिरग्निर्दायादिर्वा तस्मिन् गृह्याणि' इति गौतमः। उक्तानुकीर्तनं सम्बन्धकरणार्थं। सम्बन्धकरणे प्रयोजनं कथं भाष्यः परिभाषाः प्राप्नुयुरिति। कथं वा न प्राप्नुयुः शास्त्रान्तरत्वात्। कथं शास्त्रान्तरत्वं। सूत्रसमाप्तावाचार्यनमस्कारात्। शास्त्रान्तर एवाचार्यनमस्कार उपपद्यते। इदं प्रतिज्ञासूत्रम्॥ १॥

## त्रयः पाकयज्ञाः॥ २॥

पाकयज्ञास्त्रयस्त्रिविधा इत्यर्थः। हुताः। अहुताः प्रहुताः ब्रह्मणिहुताः इत्येकैकस्मिन् बहुवचननिर्देशात्। यदि हि त्रिविधत्वं न स्यात् एकवचनेन निर्देशं कुर्यात्। तस्मात्त्रिविधत्वमिति। पाकयज्ञा अल्पयज्ञाः। प्रशस्तयज्ञा वा। दृष्टश्चोभयत्र पाकशब्दः। 'योऽस्मत् पाकतरः' इत्यत्राल्पत्वे पाकशब्दः। 'तं पाकेन मनसाऽपश्यं' इति 'यो मा पाकेन मनसा' इति च प्रशंसायां। तेन आज्यहोमेष्वपि पाकयज्ञतन्त्रं सिद्धं भवति। यदि हि पाकशब्दः पक्वे वर्तेत आज्यहोमेषु तन्त्रं न स्यात्। इष्यते च। तस्मान्न तत्र वर्तते। प्रशस्तयज्ञा इत्युक्तम्। कथं प्रशस्तत्वं। उच्यते। यस्मादेतेषु संस्कारा उच्यन्ते। तैश्च ब्राह्मण्यमवाप्यते। के पुनस्ते संस्काराः। गर्भाधानादयः। तस्मात् सर्वेषां पाकयज्ञत्वमिति यदुक्त

[illegible] ॥ २ ॥ कथं त्रिविधत्वमित्यत आह ।

**हुता अग्नौ हूयमाना अनग्नौ प्रहुता ब्राह्मणभोजने ब्रह्मणिहुताः ॥ ३ ॥**

अग्नौ हूयमानाः 'हविष्यस्य जुहुयाद्' [गृ० १।२।१] इत्येवमादयो हुताः। अनग्नौ क्रियमाणाः 'अथ बलिहरणम्' [गृ० १।२।३] इत्येवमादयः प्रहुताः। ब्राह्मणभोजनं यत्रास्ति ब्राह्मणान् भोजयित्वेति ते ब्रह्मणिहुताः। अग्नाविति वचनमनग्नौ हूयमानस्य सर्पबलेः प्रहुतत्वार्थं। सोऽपि हि जुहोतिशब्दचोदितः। हुतादिसंज्ञाविधानं कृत्स्नोपदेशार्थं। शब्दतश्चार्थतश्च मृगतीर्थसंज्ञावत्। अथवा त्रैविध्योपदेशार्थं। पाकयज्ञानामेतत् तन्त्रमिति वक्ष्यति। *अत्र त्रैविध्योपदेशे सति तत् पाकयज्ञग्रहणमपार्थकं। तत्समानजातीयानामेव हुतानां पाकयज्ञानां तन्त्रं यथा स्यादित्येवमर्थं त्रैविध्योपदेशः। प्रहुतं ब्रह्मणिहुतानां माभूत् तन्त्रमिति। तेन सर्पबल्यादाववदानधर्मा निवृत्ताः, ब्राह्मणभोजने च निर्वापादि निवृत्तम् ॥ ३ ॥

**अथाप्यृच उदाहरन्ति यः समिधा य आहुती यो वेदेनेति ॥ ४ ॥**

अधिकपादग्रहणमृचोऽधिकस्य तृचस्य ग्रहणार्थं, न तृचस्य। तृतीयस्यामप्यर्थविरोधात्। बहुवचनन्तु अग्निरुपाय, आ ते अग्ने, यः समिधेति तृचावभिप्रेत्य। ऋचामुदाहरणं कथं। एतान्यपि कर्माणि नित्यानि श्रौतैस्तुल्यानि आहिताग्नेरपि स्युरित्येवमर्थं ॥ ४ ॥

* त्रिविधानाञ्च पाकयज्ञत्वे सति तत्र० इति का० पु० पाठः।

समिधमेवापि श्रद्दधान आदधन्मन्येत यज इद-मिति नमस्तस्मै. य आहुत्या यो वेदेनेति विद्ययैवा-प्यस्ति प्रीतिस्तदेतत्पश्यन्नृषिरुवाच. अगोरुधाय गविषे-द्युक्षा यदस्म्यं वचः। घृतात्स्वादीयो मधुनश्च वोचतेति. वच एव म इदं घृताच्च मधुनश्च स्वादीयोऽस्ति प्रीतिः स्वादीयोऽस्त्वित्येव तदाह. आ ते अग्न ऋचा हविर्हृदा तष्टं भरामसि। ते ते भवन्तूक्षण ऋषभासो वशा उतेति. एत एव म उक्षाणश्च ऋषभाश्च वशाश्च भवन्ति. य इमं स्वाध्यायमधीयत इति यो नमसा स्वध्वर इति नमस्कारेण वै खल्वपि न वै देवा नमस्कारमति यज्ञो वै नम इति हि ब्राह्मणं भवति ॥ ५ ॥ ॥ १ ॥

समिधमेवापि श्रद्दधान आदधन्मन्येत इत्यारभ्य यज्ञो वै नम इत्यन्तं ब्राह्मणं भवति। तत्र समिधेत्यस्य तात्पर्यकथनं ब्राह्मणं। समिधमेवापीति। समिधमेवापि श्रद्दधान आदधद्यज इदं दैवतमिति मन्येतैव। कुतः। नमस्तस्मै। अत्र नमःशब्देनान्नमुच्यते। निघण्टुषु नमःशब्दोऽन्ननामसु पठितः। समिदपि तस्मै दैवताय नमो भवति अन्नं भवति। प्रीतिहेतुर्भवतीत्यर्थः। श्रद्दधान इत्यनेन श्रद्धायुक्तस्यैव पाकयज्ञेऽधिकार इति ज्ञाप्यते। य आहुतीत्यस्य विवरणं ब्राह्मणं। य आहुत्येति। तत्र 'सुपां सु लुग्' [पा०७।१।३९।] इत्यादिना तृतीयैक-वचनस्य पूर्वसवर्णादेशः। यो वेदेनेत्यस्य तात्पर्यकथनं ब्राह्मणं। यो वे-

देनेति । विद्ययैवेत्यादि । विद्ययापि प्रीतिर्दैवतस्यास्त्येवेत्यर्थः । द्रव्यत्यागाभावेऽपि वेदस्याध्ययनमात्रेणापि प्रीतिरस्तीत्यभिप्रायः । विद्यया प्रीतिरस्तीत्येतत् द्रढयितुं तस्मिन्नर्थे मन्त्रान्तरं साक्षित्वेन श्रुतिर्दर्शयति । तदेतदित्यादि । तदेतदर्थरूपं पश्यन् *ऋषिर्मन्त्रदृष्टा उवाच । अगोरुधायेत्यादि । अस्मिन् †सूत्रे स्तोतारः प्रत्यक्षीकृताः । एवम्भूतायेन्द्राय हे सखायो वचो वोचत । घृतात् स्वादीयो मधुनश्चेति कुर्वन्ति । वच एवेत्यनेन तु तात्पर्यकथनपरेण ब्राह्मणेन देवताः प्रत्यक्षीकृताः सूच्यन्ते । हे इन्द्र इदं मे मम वच एव घृताच्च मधुनश्च स्वादीयः । अभिहुतत्वात् स्वादीयस्त्वस्य प्रार्थनीयमिति दर्शयति । स्वादीयोऽस्त्वित्यादिना । स्वादीयोऽस्त्वित्येवाभी साक्षित्वेन ऋषिराहेत्यर्थः । अतोऽस्ति प्रीतिः । एवमध्ययनं रसात् स्वादुतरमित्युक्तं । मांसादपि स्वादुतरमिति मन्त्रान्तरं दर्शयति । आ ते अग्न इत्यादि । अस्य मन्त्रस्य तात्पर्यकथनं ब्राह्मणं । एत एवेत्यादि । हे अग्ने एत एव मे मत्सम्बन्धिनः । अत एव ते तव उक्षाणश्चर्षभाश्च वशाश्च भवन्ति । भवन्त्वित्यर्थः । भवन्तीति लिङर्थे लेट् । [पा० ३।४।७] विकरणमिप्रत्ययाडागमेकारलोपास्तु व्यवस्थितविकल्पत्वान्न भवन्ति । के मत्सम्बन्धिन इति चेत् । ये इमं स्वाध्यायमधीयत इति । अस्य मन्त्रस्य तात्पर्यं उक्षादिमांसेन तव यावती प्रीतिस्तावती तव विद्ययापि भवत्वित्यर्थः । उत्तरार्द्धर्चतात्पर्यकथनं ब्राह्मणं । यो नमसा स्वध्वर इति नमस्कारेणेत्यादि । नमस्कारेणापि योऽग्निम-

---

* ऋषिरप्युवाचेति का० पु० पाठः ।

† सूत्रे इत्यत्र मन्त्रे इति का० पु० पाठः ।

चयति सोऽपि स्वध्वरः शोभनयज्ञः। 'तस्येद्‌र्वन्तो रंहयन्त.' इत्यादि पाकयज्ञानामर्थवादः। नमस्कारेणापि खलु प्रीतिरस्ति। कुतः। न वै देवा नमस्कारमति। अतिरतिक्रमणे। देवा हि नमस्कारं नातिक्रामन्ति। तमप्याद्रियन्त इत्यर्थः। किमिति नातिक्रामन्ति। यज्ञो वै नमः। नमस्कारोऽपि यज्ञ इत्यर्थः। इति हि ब्राह्मणं भवति। इतिशब्दो निर्दिष्टपरामर्शी। समिधमेवेत्यादि एतमन्तं ब्राह्मणं भवतीत्यर्थः॥ ५॥

इति प्रथमे प्रथमा कण्डिका॥०॥

---

**अथ सायंप्रातःसिद्धस्य हविष्यस्य जुहुयात्॥ १॥**

अथशब्दो विशेषप्रक्रियार्थः। अथ गृह्याण्युच्यन्त इति। अत्र सायम्प्रातःशब्दो लक्षणया अहोरात्रवचनौ। कुत एतत्। स्मृतिदर्शनात्। 'सायम्प्रातरशनान्यभिपूजयेत्' इति। अशनञ्च मध्याह्ने विहितं। 'पूर्वाह्णे देवानां मध्यन्दिने मनुष्याणां अपराह्णे पितॄणां' इति। वैश्वदेवानन्तरं आतिथ्यादेर्विधानाच्च। सिद्धं पक्वं। सिद्धस्येति दध्नः पयसश्च माभूत्। हविष्यस्येति *चणककोद्रवादीनां माभूत्। †कथमहविष्यस्य प्राप्नुयात्। अन्नसंस्कारत्वात्। उभयमपि तर्हि नारभ्यं। दर्शनादेव सिद्धस्य हविष्यस्य च भविष्यति।

---

* वरककाद० इत्यादि का० पु० पाठः।

† कथं वा हवि० इति का० पु० समीचीनः पाठः।

यथा चतुरश्चतुरो मुष्टीन् निर्वपतीत्युक्ते हविष्कैव प्रतीयते सिद्धं च तद्भवति। अनारभ्यमाणे दोषः। अनादिष्टद्रव्यत्वादाज्यं प्रसज्येत। आज्यशेषेण वाऽनक्ति स्रुच्ये इति ब्रुवन् ज्ञापयति यत्र द्रव्यं नादिश्यते तत्राज्येन होम इति। तस्मात्तन्निवृत्त्यर्थं सिद्धग्रहणमारभ्यं तर्हि हविर्ग्रहणमपार्थकं। ननु तन्त्रसंस्कारत्वाद्धविष्यस्यापि स्यात्। अपूर्वार्थत्वाच्च न स्यात्। तर्हि तन्त्रनिवृत्त्यर्थं हविर्ग्रहणं। कथं हविष्यस्य होम एव स्यात् न तन्त्रमिति। ननु उत्तरत्र विधानान्न तन्त्रं प्राप्नोतीति च शङ्का न कार्या। तर्हि त्रिरात्रेऽपि तन्त्रनिवृत्तिप्रसङ्गात्। तत्र चेष्यते तन्त्रं। होममन्त्रानाह ॥ १ ॥

**अग्निहोत्रदेवताभ्यः सोमाय वनस्पतयेऽग्नीषोमाभ्यामिन्द्राग्निभ्यां द्यावापृथिवीभ्यां धन्वन्तरय इन्द्राय विश्वेभ्यो देवेभ्यो ब्रह्मणे ॥ २ ॥**

अग्निहोत्रदेवताभ्य इति विधायको न मन्त्रः। तथाऽर्थप्रतीतेः। अग्निहोत्रशब्दोऽयं द्रव्ये कर्मणि च वर्त्तते। तत्राग्निहोत्रदेवताभ्य इति किं द्रव्यदेवता गृह्यन्ते उत कर्मदेवता इति संशयः। काः पुनर्द्रव्यदेवताः। 'रुद्राद्या रौद्रङ्गविमत्' इत्याद्याः श्रुतावुक्तास्ता न सम्भवन्ति। भक्तिमात्रत्वात्। तेन कर्मदेवता गृह्यन्ते। एवञ्चेदग्निर्गृहपतिरित्येवमाद्या अपि प्राप्नुवन्तीति शङ्का न कार्या। तासामनित्यत्वात्। कास्तर्हि। अग्निः सूर्यः प्रजापतिश्चोभयत्र। श्रुतौ चास्य सम्यगुपदेशः। 'तस्य वा एतस्याग्निहोत्रस्य'

इत्यादि। सोमाय वनस्पतये *इत्येको मन्त्रः। वनस्पतेर्गुणत्वेन दृष्टत्वात्। 'अग्निर्गृहपतिः सोमो वनस्पतिः' इति। समाचारश्चैवमेव। इत्युक्तो देवयज्ञः॥ २॥

## स्वाहेत्यथ बलिहरणम्॥ ३॥

अप्रेषितयागत्वादेव स्वाहाकारे सिद्धे स्वाहाकारवचनं ज्ञापनार्थं। एतज्ज्ञाप्यते। अन्यत्र बलिहरणे स्वाहाकारो न भवतीति। तेन चैत्यबलौ नमस्कारो भवति। अथशब्द आनन्तर्यार्थः। इतरथा कर्मान्तरत्वात् कालान्तरे वा बलिहरणं स्यात्। ब्रह्मयज्ञस्त्वेषां पूर्वो वा स्यात्। उत्तरो वा। मनुष्ययज्ञस्तूत्तर एव। 'वैश्वदेवं कृत्वा अतिथिमाकाङ्क्षेद्' इतिवचनात्॥ ३॥

## एताभ्यश्चैव देवताभ्योऽद्भ्य ओषधिवनस्पतिभ्यो गृहाय गृहदेवताभ्यो वास्तुदेवताभ्यः॥ ४॥

एताभ्यः प्रागुक्ताभ्यो देवताभ्यश्चकाराद्वक्ष्यमाणदेवताभ्यश्च। बलिहरणं कार्यं। एवकारः पौनर्वाचिकः। भूमौ प्राक्संस्थां पङ्क्तिं करोति। ब्रह्मणे स्वाहेति हुत्वाऽन्तरालमुक्त्वाऽद्भ्य इत्यादिभिर्जुहोति। गृहदेवताभ्य इति मन्त्रः न विधायकः। तथा वास्तुदेवताभ्य इति च। यदि हि विधायकः स्यात् उभयवचनमपार्थकं स्यात्। गृहमेव हि वास्त्वित्युच्यते॥ ४॥

* [illegible]

इन्द्रायेन्द्रपुरुषेभ्यो यमाय यमपुरुषेभ्यो वरुणाय वरुणपुरुषेभ्यः सोमाय सोमपुरुषेभ्य इति प्रतिदिशम् ॥ ५ ॥

दिग्ग्रहणेन चतस्रो दिशो गृह्यन्ते। यत्रैव प्रधानदेवतास्तत्रैव पुरुषैर्भवितव्यमिति कृत्वा प्रधानानामुत्तरतः पुरुषेभ्यो बलिं हरेत् ॥ ५ ॥

ब्रह्मणे ब्रह्मपुरुषेभ्य इति मध्ये ॥ ६ ॥

दिग्देवतानां मध्ये पूर्वोक्ते अन्तराले ॥ ६ ॥

विश्वेभ्यो देवेभ्यः ॥ ७ ॥

मध्य एव ॥ ७ ॥

सर्वेभ्यो भूतेभ्यो दिवाचारिभ्य इति दिवा ॥ ८ ॥

मध्य एव। दिवाग्रहणं ज्ञापनार्थं क्रियते। तेन वैश्वदेवस्य प्रातरारम्भणं भवति। इतरथा सायम्प्रातरुपदेशात् सायमुपक्रमः स्यात् अग्निहोत्रवत्। तच्चानिष्टं। अतो दिवाग्रहणं। तेनाग्नये स्वाहेति सायं जुहुयादित्यत्र सायमुपक्रमः॥ ८ ॥

नक्तञ्चारिभ्य इति नक्तम् ॥ ९ ॥

दिवाचारिभ्य इत्यस्य स्थाने नक्तञ्चारिभ्य इति नक्तं भवति ॥ ९ ॥

**रक्षोभ्य इत्युत्तरतः ॥ १० ॥**

सर्वासामुत्तरतः ॥ १० ॥

**स्वधा पितृभ्य इति प्राचीनावीती शेषं दक्षिणा निनयेत् ॥ ११ ॥ ॥ २ ॥**

'यज्ञोपवीतशौच च' [श्री०१।१।१०] इति यत्र प्राचीनावीतित्वं निवीतित्वं वाऽऽचार्येण न विहितं तत्र यज्ञोपवीतित्वं प्राप्तं। अतः प्राचीनावीतित्वं विधीयते। निनयेदिति वचनं क्रियान्तरज्ञापनार्थं। तेन बलिहरणमिदं न भवति। किमेवं सिध्यति स्वाहाकारो न भवति। ननु स्वधाकारः प्रदानार्थः स्वाहाकारश्च प्रदानार्थ इत्युभयोरेककार्यकारित्वेन समानजातीयत्वात् स्वधाकारस्तस्य बाधको भवति। नैतदेवं। *समानार्थयोः समुच्चयो दृश्यते। यथा सोमाय पितृमते स्वधा नम इति स्वधानमस्कारयोः तद्वदत्राप्याशङ्का स्यात्। का पुनरियं क्रिया। पितृयज्ञः। एवं च कृत्वा पितृयज्ञार्थं ब्राह्मणभोजनमन्वहं न कर्त्तव्यमिति सिद्धं। शेषग्रहणमानन्तर्यार्थं। असत्यस्मिन् क्रियान्तरत्वात्कालान्तरे वा स्यात्। एवमुक्तं वैश्वदेवं। यस्मिन् कस्मिंश्चिदग्नौ वैश्वदेवं कार्यं न गृह्य एवेति नियमः। कुतः। प्राक्सन्निधानाद्विवाहाग्नेः। यदि हि तत्राभिप्रेतमभविष्यत् तमेव पूर्वं ब्रूयात्। पाणिना च वैश्वदेवं कार्यं न पात्रान्तरेण शक्यत्वात् ॥

इति प्रथमे द्वितीया कण्डिका ॥०॥

---

* समानार्थयोः स्थाने प्रदानार्थयोरिति सो० का० पु० पाठः।

**अथ खलु यत्र क्व च होष्यन्त्स्यादिषुमात्रावरं सर्वतः स्थण्डिलमुपलिप्योल्लिख्य षल्लेखा उदगायतां पश्चात्प्रागायते नानान्तयोस्तिस्रो मध्ये तदभ्युक्ष्याग्निं प्रतिष्ठाप्यान्वाधाय परिसमूह्य परिस्तीर्य पुरस्ताद्दक्षिणतः पश्चादुत्तरत इत्युदकसंस्थन्तूष्णीं पर्युक्षणम् ॥ १ ॥**

अथशब्दोऽधिकारार्थः। इत उत्तरं यानि वक्ष्यन्ते तेषामेवायं होमविधिर्भवतीति। तेन वैश्वदेवः क्वचग्रहणेन प्राप्यमाणो होम्यधर्मा न भवति। खलुशब्दोऽपार्थकः। मिताक्षरेष्वनर्थक इति वचनात्। यत्र-क्वच-ग्रहणमहरहः क्रियान्तरविध्याशङ्कानिवृत्त्यर्थं। यत्र क्व च होष्यन्त्स्यादिति होममनूद्य धर्मविधिः। तर्हि यत्रैतेवास्तु क्वच-ग्रहणमनर्थकं। न. तन्त्रप्रतिषेधविषयेऽप्यौपासनाग्निपरिचरणे एतत्सूत्रविहितपरिसमूहनपरिस्तरणपर्युक्षणानां प्राप्त्यर्थं क्वच-ग्रहणं। लेखादयो न सन्तीति वक्ष्यामः। इषुमात्रा मात्रा यस्य स्थण्डिलस्य तदिषुमात्रं। एकस्य मात्राशब्दस्य लोपः। उष्ट्रमुखवत्। तच्च तदवरञ्च इषुमात्रावरं। अवरं निकृष्टमित्यर्थः। सर्वतः सर्वासु दिक्षु। चतसृष्वित्यर्थः। चतसृष्वपि दिक्षु इषुमात्रप्रमाणं ततोऽधिकं वा चतुरस्रं स्थण्डिलं गोमयेनोपलिप्य षट् लेखा उल्लिखेत्। षड्-ग्रहणं कथं। षट्स्वपि लेखासु अग्नेः स्थापनं यथा स्यादिति केनचिद्यज्ञियेन शकलेन स्थण्डिलमध्ये उदग्दीर्घां प्रादेशमात्रां न्यूनां वा लेखामग्निप्रतिष्ठापनदेशस्य पश्चाल्लिखेत्।

नानेत्यसंसर्गार्थं। तस्या अन्तयोर्नाना असंसृष्टे प्रागायते लेखे लिखेत्। ततस्तिस्रो मध्ये असंसृष्टाः प्रागायताः लेखाः लिखेत्। शकलं तत्रैव निधाय। स्थण्डिलमभ्युक्ष्य शकलं निरस्याप उपस्पृश्याभ्यात्ममग्निं प्रतिष्ठाप्यान्वादधाति। ततोऽतिदेशप्राप्तं बर्हिष इध्मस्य च सन्नहनं करोति। अन्वाधानं नाम कर्माङ्गत्वेन द्वयोस्तिसृणां समिधां अभ्याधानं। ततः परिसमूह्य परिसमूहनं नामाऽग्नेः समन्तात् परिमार्जनं। तच्चाग्निहोत्रवत्। ततः परिस्तीर्य। पुरस्ताद्दक्षिणतः पश्चादुत्तरत इत्येवं। उदक्संस्थवचनं एकैकस्यां दिश्युदक्संस्थताप्राप्त्यर्थं। अथवा इत्युदक्संस्थमिति पृथग्योगः। निपातानामनेकार्थत्वादितिशब्द एवम्प्रकारे। एवंविधं यत्कर्म सर्वदिक्सम्बद्धं परिसमूहनपर्युक्षणशिरस्त्रिरुन्दनादिकं तदपराजितायां दिश्यारभ्योदक्संस्थं कार्यमित्यर्थः। ततस्तूष्णीं पर्युक्षणं करोति। तूष्णीं-ग्रहणं मन्त्रवर्जमन्ये धर्मा अग्निहोत्रदृष्टा भवन्तीत्येवमर्थं। त्रिस्त्रिरेकैकं पुनः पुनरुदकमादायादायान्ते च कर्मणां पर्युक्षणम्। उभयत्र च परिसमूहनपूर्वकत्वमित्यत्र पुनः परिसमूहनविधानं मध्ये परिस्तरणसिद्ध्यर्थम्। एतस्मिन् काले उत्तरतोऽग्नेरपः प्रणयति चमसेन कांस्येन मृण्मयेन वा। उत्तरत्र निनयनदर्शनात्॥ १ ॥

## पवित्राभ्यामाज्यस्योत्पवनम्॥ २ ॥

कार्यमिति शेषः। अथ किंलक्षणे पवित्रे कथं वा उत्पवनं कार्यमित्येतद्द्वयं निर्णेतुमाह॥ २ ॥

अप्रच्छिन्नाग्रावनन्तर्गर्भौ प्रादेशमात्रौ कुशौ नानान्तयोर्गृहीत्वाङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यां सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति प्रागुत्पुनाति सकृन्मन्त्रेण द्विस्तूष्णीम् ॥ ३ ॥

प्रशब्दः सूक्ष्मच्छिन्नाग्रयोरनिवृत्त्यर्थः । न विद्यते अन्तर्मध्ये गर्भौ ययोस्तौ तथोक्तौ । प्रादेशमात्रौ कुशौ । एवंलक्षणयुक्तौ कुशौ पवित्रसंज्ञौ । नानेत्यसंसर्गार्थं । पवित्रे अन्तयोरसंस्पृष्टे अङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यां गृहीत्वा प्रागुत्पुनाति सकृन्मन्त्रेण द्विस्तूष्णीं । प्रागितिपाठः कार्यः । प्राङिति पुल्लिङ्गपाठे तु कर्तुः प्राङ्मुखत्वं स्यात् । तच्च परिभाषासिद्धं । ननु कर्मणश्चापि प्राक्त्वं तत एव सिद्धं । सत्यं । तत्तु शास्त्रान्तरदृष्टं पुनराहारनिवृत्त्यर्थं । तेन ज्ञायते शास्त्रान्तरदृष्टानामविरोधिनां पात्रासादनादीनामिच्छातः क्रियेति ।

इत्थं हि शास्त्रान्तरे दृष्टं । परिस्तरणकाले उत्तरतोऽग्नेः कांश्चिद्दर्भानास्तीर्य ब्रह्मवत्सु कर्मसु दक्षिणतोऽग्नेरपि कांश्चिद्दर्भानास्तीर्य ततोऽग्निं पर्युक्ष्य उदगग्नेर्दर्भेषु द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति उभाभ्यां पाणिभ्यां । अयं पात्रासादनक्रमः ।

'प्रोक्षणपात्रमथ स्रुवयुक्तं पात्रमपां प्रणयनाय विशिष्टम् ।

भाजनमाज्यहविर्ग्रहणार्थं लिध्ममथो परिसादय दर्भान्' ॥ इति ।

आज्यहोमेषु दर्वीमत्सु तु कर्मस्वयं क्रमः ।

स्थालीञ्चरोः प्रोक्षणभाजनञ्च दर्वीं स्रुवौ सादय दर्विहोमे।
पात्रं प्रणीतार्थमथाज्यपात्रमिध्मं क्रमेण क्रमवित् कुशैश्च॥

ततोऽप्रच्छिन्नाग्रावित्युक्तलक्षणे पवित्रे गृहीत्वा प्रोक्षणपात्रे निधायाप आसिच्य ताभ्यां त्रिरुत्पूय उत्तानानि पात्राणि कृत्वा विस्रस्येध्मं सर्वाणि पात्राणि प्रोक्षति। ततः प्रणीता-पात्रं प्रत्यगग्नेर्निधाय तस्मिंस्ते पवित्रे अन्तर्द्धायाद्भिः पूरयित्वा गन्धादि प्रक्षिप्य पाणिभ्यां पात्रं नासिकान्तमुद्धृत्योत्तरतोऽग्निं दर्भेषु निधाय दर्भैः प्रच्छाद्यासादयेदिति। आचार्यस्य तु पूर्णपात्रं कार्यं। अन्यस्य तु करणेऽभ्युदयः। अकरणे न प्रत्यवाय इत्याशयः।

इत्थं चान्यशास्त्रे दृष्टं। पूर्णपात्रनिधानानन्तरं तत्रस्थे पवित्रे गृहीत्वाज्यस्थाल्यां निधायाज्यमासिच्योदगङ्गारानपोह्य तेष्वधिश्रित्याज्यमवज्वलयेत्। द्वे दर्भाग्रे प्रच्छिद्य प्रक्षाल्याज्ये प्रत्यस्य पुनर्ज्वलता तेनैवोल्मुकेन त्रिः परिहरेत् येनावज्वलनं कृतं। ततः शनैः उदगुद्वास्याङ्गारानतिसृज्य तत्रस्थमेवाज्यमुत्पूय पवित्रे त्वद्भिः प्रोक्ष्याग्नौ विनिक्षिपेदिति। आचार्यस्योत्पवनं नित्यम्। अन्यत्पाक्षिकं।

पूर्ववदित्याकृतं स्रुक्स्रुवसंमार्जनमप्यन्यशास्त्रे दृष्टं। तस्यापीच्छातः क्रिया। अनयोः सम्मार्ग उच्यते। दक्षिणेन हस्तेनोभौ गृहीत्वा सव्येन कांश्चिद्दर्भानादाय सहैवाग्नौ प्रताप्य जुहूं निधाय दक्षिणेन पाणिना स्रुवस्य बिलं दर्भाग्रैर्बिलादारभ्य प्रागपवर्गं त्रिः संमृज्याधस्तादग्रेणैवाग्रमभ्यात्मन्तिः संमार्ष्टि। ततो दर्भाणां मूलेन दण्डस्याधस्तात् बिलपृष्ठादारभ्य यावदुपरिष्टाद्बिलं तावत्त्रिः संमार्ष्टि। अथाऽद्भिः प्रोक्ष्य स्रुवं निष्टप्याज्यस्थाल्यां निधायोदक्स्पृष्टैरेव

दर्भैर्जुहूं चैवमेव संमार्ष्टि। ततो दर्भानद्भिः प्रक्षाल्याग्नावनुप्रहरेत्। एवं संमार्गः।

स्विष्टकृदन्ते चेध्मसन्नहनानामग्नौ प्रासनं दृष्टम्। अन्यदपि यदस्मच्छास्त्राऽविरुद्धं परशास्त्रे दृष्टन्तदपीच्छातः कार्यमिति ज्ञापयितुं प्रागुत्पुनातीति पुनराहारप्रतिषेधः कृतः। किञ्च उत्पुनाति त्रिरित्येव वाच्यं लाघवार्थं। तथा सति सर्वत्रैव कर्मावृत्तावित्यनेन सकृन्मन्त्रेण द्विस्तूष्णीं इति सिद्ध्यति। एवं सिद्धे इदं वचनं गृह्ये कर्मावृत्तौ मन्त्रावृत्तिर्भविष्यतीत्येवमर्थं। पूर्वयोगः किमर्थः। अस्याधिकारार्थ इति चेत्। तर्हि प्रागुत्पुनात्याज्यमित्यत्रैव वाच्यम्। अथ पवित्रसंज्ञार्थः तर्हि कुशौ पवित्रे इत्यत्रैव वाच्यम्। उच्यते। पूर्वेणामन्त्रकमुत्पवनं विधीयते। अनेन तु समन्त्रकं। तत्र वैतानिके अमन्त्रकं गृह्ये कर्मणि समन्त्रकमित्येवं विनिवेशः॥ ३॥

## कृताकृतमाज्यहोमेषु परिस्तरणम्॥ ४॥

कृतिरेव कृतं। कृतञ्च अकृतञ्च यस्य तत् तथोक्तं। आज्यमेव यत्र हविः स आज्यहोमः। अन्यथाज्यग्रहणस्य वैयर्थ्यं स्यात्। सर्वत्र ह्याघारादयः सन्त्येव। आज्यहोमेषु परिस्तरणं कार्यं वा न वेत्यर्थः। अयं च परिस्तरणविकल्पो यत्राग्रहणमस्ति यथा 'आज्याहुतीर्जुहुयात्' इति तत्रैव भवति न पुनरनादिष्टाज्यहोमेषु। यद्यनादिष्टहोमेष्वप्ययं विकल्पः स्यात् तत्राज्यग्रहणमपार्थकं स्यात्॥ ४॥

## तथाज्यभागौ पाकयज्ञेषु ॥ ५ ॥

तथेति कृताकृतावित्यर्थः। पाकयज्ञेषु सर्वेष्वाज्यभागौ कार्यौ वा नवेत्यर्थः। पाकयज्ञग्रहणमाज्यहोमाधिकारनिवृत्त्यर्थम् ॥ ५ ॥

## ब्रह्मा च धन्वन्तरियज्ञशूलगववर्जं ॥ ६ ॥

तथेति वर्तते। पाकयज्ञेष्विति च। ब्रह्मा च सर्वेषु पाकयज्ञेषु कृताकृतो भवति। धन्वन्तरियज्ञं शूलगवं च वर्जयित्वा। अथ तयोर्नित्यो भवति उत नैव भवति। नित्यो भवतीति ब्रूमः। कुतः। तयोरुपदेशात्। 'ब्रह्माणमग्निं चान्तरा वै वेद्यं चरित्रवन्तं ब्रह्माणमुपवेश्य' इति च। तर्हि तस्मादेव नित्योऽस्तु किमनेनेति च शङ्का न कार्या। अस्मिन् विकल्पप्रतिषेधेऽसति उपदेशस्य पक्षे कृतार्थत्वात्। तयोरपि ब्रह्मा चौलवत् कृताकृतः स्यात्। ब्रह्मास्ति चेत् प्रणीताप्रणयनात् पूर्वं समस्तपाण्यङ्गुष्ठो भूत्वाऽग्रेणाग्निं परीत्य दक्षिणतः कुशेषु 'निरस्तः परावसुः' इति तृणं प्रत्यग्दक्षिणान्निरस्य 'इदमहमर्वावसोः सदने सीदामि' इति मन्त्रेणोपविशेत्। ततो बृहस्पतिर्ब्रह्मा ब्रह्मसदन आशिष्यते 'बृहस्पते यज्ञं गोपाय' इत्यन्तं ब्रह्मजपं जपेत्। ततो 'ब्रह्मन्नपः प्रणेष्यामि' इति कर्ताऽतिसृष्टो 'भूर्भुवः स्वर्बृहस्पतिप्रसूतः' इति जपित्वा 'ॐ प्रणय' इत्यतिसृजेत्। केचिदतिसर्जनं प्रत्यतिसर्जनञ्च नेच्छन्ति। कर्मान्ते *प्रायश्चित्तानि संस्थाजपं च कुर्यात्। सर्वदा यज्ञमना भवेदुदङ्मुखश्च ॥ ६ ॥

---

* सर्वप्रायश्चित्तानीति सो० का० पु० पाठः।

## अमुष्मै स्वाहेति जुहुयात् ॥ ७ ॥

क्वचिन्नामधेयेन होम उक्तः । 'सावित्र्यै ब्रह्मणे' इत्यादि । क्वचिन्मन्त्रेण होम उक्तः । 'अग्ने नय सुपथा राये अस्मान्' इति चतसृभिरिति । यत्र तु नोभयथा तत्र तु नामधेयेन कथं होमः स्यात् इत्येतत् सूत्रं । प्राजापत्यस्य स्थालीपाकस्य हुत्वा काम्यास्थरव इत्यादौ ॥ ७ ॥

## अग्निरिन्द्रः प्रजापतिर्विश्वेदेवा ब्रह्मेत्यनादेशे ॥ ८ ॥

यत्र होमस्यानादेशः कर्मणस्त्वादेशस्तत्रैता देवता होतव्याः । कुत्र । जातकर्मादौ । तर्हि रथारोहणेऽपि स्यात् । एवं तर्हि अन्यथा व्याख्यास्यामः । यत्र होमश्चोद्यते न मन्त्रः चौलकर्मादौ 'नैके काञ्चन' [गृ०१।४।६] पक्षे तत्रैताभ्यो देवताभ्यो जुहोति । मन्त्रानादेश इतीयमेव व्याख्या साध्वी । मन्त्रप्रकरणत्वात् । तेन जातकर्मादौ न होमोऽस्ति । अन्ये तु पूर्वोक्तदोषपरिहारेण वर्णयन्ति । यत्र परशास्त्रे होमश्चोद्यते स्वशास्त्रे तु कर्ममात्रं तत्रैता देवता भवन्तीति । क्व । जातकर्मादौ ॥ ८ ॥

## *एकबर्हिराद्याज्यस्विष्टकृतः स्युस्तुल्यकालाः ॥ ९ ॥

एकबर्हिरादिर्येषां पाकयज्ञानां ते तथोक्ताः । तुल्यकाला एककालाः । एकस्मिन् काले यद्यनेके पाकयज्ञाः कार्यत्वेन प्राप्ताः तदा ते समानतन्त्राः कार्या इत्यर्थः । किमुदाहरणं । यदा पर्वणि रात्रौ काम उत्पद्यते तदा काम्यपार्वणयोरेककालत्वं । यदा

* एकबर्हिरिध्माज्येत्यादिपाठः सर्वत्र परन्तु टीकासम्मतः ।

वाऽऽग्रयणाऽऽश्वयुजी कर्मणी आश्वयुज्यां क्रियेते तदा तयोरेकका-
लत्वं। बर्हिरादिग्रहणस्य तन्त्रोपलक्षणार्थतां स्पष्टयितुं यज्ञगाथामु-
दाहरति॥ ९॥

तदेषाभियज्ञगाथा गीयते।

पाकयज्ञान् समासाद्य एकाज्यानेकबर्हिषः।
एकस्विष्टकृतः कुर्यान्नानापि सति दैवते॥ १०॥
इति॥ ३॥

तस्मिन्नर्थे एषा यज्ञगाथाऽभिगीयते पठ्यते। बहून् पाकयज्ञा-
नेकस्मिन् काले समासाद्य प्राप्य एकाज्यानेकबर्हिषः एकस्विष्टकृतः
कुर्यान्नानापि सति दैवते। न प्रतिदैवतं तन्त्रमावर्तयितव्य-
मित्यर्थः॥ १०॥ ॥ ३॥

इति प्रथमे तृतीया कण्डिका॥०॥

उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौल-
कर्मोपनयनगोदानविवाहाः॥ १॥

अनेन चौलकर्मादीनां कालो विधीयते। उदग् यदा गच्छत्या-
दित्यः तदुदगयनं। तथा लोकप्रसिद्धेः। आपूर्यमाणस्य चन्द्रस्य
यः पक्षः स तथोक्तः। सहि मासस्य च पक्षस्य च कर्ता। अथवा
आपूर्यमाणस्त्वासौ पक्षश्च आपूर्यमाणपक्षः। सहि चन्द्ररश्मिभिरापूर्यते
शुक्लपक्ष इत्यर्थः। ज्योतिःशास्त्राविरुद्धं कल्याणं नक्षत्रं। चौल-

कर्मेति चौलस्यैव संज्ञान्तरं नतु व्रतादेशानामयं काल इष्यते। स कथं प्राप्नोति। उपनयनातिदेशात्। तर्हि अत्र गोदानग्रहणम-पार्थकं चौलातिदेशात्। उच्यते। समावर्तनार्थं गोदानग्रहणं। 'गोदानिकं कर्म कुर्वीत' इति कर्मग्रहणं यथा कर्मणोऽन्यनियमे ऽग्न्यमनादिकं निवर्तयति तथा कालमपि निवर्तयेत्। तस्मात् गोदानग्रहणं यत्र गोदानगन्धोऽप्यस्ति तत्रापि यथा स्यात्। तर्हि समावर्तनग्रहणमेव कार्यम्। उच्यते। लाघवार्थं गोदानग्रहणम्॥ ॥ १ ॥

## सार्वकालमेके विवाहम्॥ २॥

एके आचार्याः सर्वस्मिन् काले विवाहमिच्छन्ति। नोदगय-नादिनियमः। तेषां कोऽभिप्रायः। दोषश्रवणात् 'ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति' इति। अन्ये च लौकिका दोषाः समुत्पद्यन्ते॥ २॥

## तेषां पुरस्तात् चतस्र आज्याहुतीर्जुहुयात्॥ ३॥

तेषांग्रहणं किमर्थं। विवाहस्यानन्तरत्वात् सर्वेषां प्राप्त्यर्थ-मिति चेत्। तन्न दर्शनात्। सर्वेषां स्युः यदयं विवाहे चतुर्थी-मित्याह। उच्यते। तेषां सम्बन्धिन्यः अन्तर्वर्तिन्यः एता आहुतयो भवन्ति नतु तेभ्यः पूर्वं भवन्तीत्येवमर्थं तेषांग्रहणं। तर्हि पुरस्ताद्-ग्रहणमपार्थकं। न। प्रयोजनमुपरिष्टाद्वक्ष्यामः। सङ्ख्याव-चनं किमर्थं। तत्रैके ब्रुवते। यत्र परिमाणवचनं प्रत्यक्षग्रहणं वा

नास्ति 'धाता ददातु दाशुष इति द्वाभ्यां' इत्यादौ तत्र कथं प्रत्यादेशं होमः स्यादिति। तदसत्। एकमन्त्राणि कर्माणीतिन्यायात्। अपि च। स्वाहाकारान्तैर्मन्त्रैरिति प्रतिमन्त्रं स्वाहाकारः प्राप्तः स च प्रदानार्थः। नच तमतिक्रम्य होतव्यमिति युक्तं वक्तुमस्य विद्यमानायां गतौ। तेन सर्वत्र प्रत्यृचमेव होम इति सिद्धं। का पुनरस्य गतिः। तत्रैके नियमार्थमिति प्राहुः। समुच्चयपक्षेऽपि कथं चतस्र एव स्युः न बह्व्य इति कथं प्रयोगः एकैकस्या ऋचोऽन्ते एकैका आहुतिरिति। तदप्यसत्। प्राधान्येनाहुतिविधिप्रकरणत्वात् आहुतिसमुच्चय एव न मन्त्रसमुच्चयः। किमर्थं तर्हीदं नियमार्थमेव चतस्र एव स्युरिति। तेनाज्यभागौ न भवतः। तर्हि स्विष्टकृदपि न स्यात्। न। पुरस्तान्नियमार्थं हि पुरस्ताद्ग्रहणं कृतं। आघारौ तु स्त एव अनाहुतित्वात्। आज्यग्रहणं परिस्तरणविकल्पार्थम्॥ ३ ॥

**अग्न आयूंषि पवस इति तिसृभिः प्रजापते न त्वदेतान्यन्य इति च व्याहृतिभिर्वा ॥ ४ ॥**

चतसृभिः। चतसृणामेव हि सूत्रे व्याहृतिसंज्ञा कृता। व्याहृतिभिश्च भूः स्वाहेत्यादिभिः॥ ४ ॥

**समुच्चयमेके ॥ ५ ॥**

एके आचार्याः ऋगाहुतीनां व्याहृत्याहुतीनां च समुच्चयमिच्छन्ति। तेनाष्टाहुतयः॥ ५ ॥

नैके काञ्चन ॥ ६ ॥

एके आचार्याः कामप्याहुतिं नेच्छन्ति। नैक इत्येव वक्तव्ये काञ्चनग्रहणमृगाहुतीनां व्याहृत्याहुतीनां चायं प्रतिषेधो यथा स्यात्-किमृशब्दस्य सर्वनामत्वात् सर्वनाम्नाञ्च प्रकृतपरामर्शत्वात्-अन्यास्त्वाहुतयो होतव्या इत्येवमर्थं। तेनाऽनादेशाहुतयः सिद्धाः ॥ ६ ॥

त्वमर्यमा भवसि यत् कनीनामिति विवाहे चतुर्थी ॥ ७ ॥ ॥ ४ ॥

अत्र संशयः। पूर्वस्या बाध उतोत्कर्ष इति। उत्कर्ष इति ब्रूमः। असमानजातित्वात्। समानजातेरेव हि बाधो विहितः। एष समानजातिधर्म इति तच्छब्दचोदितस्य समानजातिर्भवति। यथा। अथ सामिधेन्यः ताः सामिधेन्य इति। अत्र च तच्छब्दचोदितत्वात् न बाधः। अपि तूत्कर्षः। यथा 'प्रतिप्रस्थाता वाजिने तृतीयः' इत्यत्र आग्नीध्रस्योत्कर्षः तद्वदत्रापि। अपि च। सङ्ख्यानिर्दिष्टो न पूर्वं बाधते। यत्र तु बाधते तत्र स्थानग्रहणं करोति। यथा तृतीयाहुतिस्थाने महाव्रतमिति। तस्मात् उत्कर्ष इति सिद्धम् ॥ ७ ॥

इति प्रथमे चतुर्थी कण्डिका ॥०॥

**कुलमग्रे परीक्षेत ये मातृतः पितृश्चेति यथोक्तं पुरस्तात् ॥ १ ॥**

*कुलशब्देनोभौ वंशौ महापातकादिरहिताविति सिद्धौ तथाऽपस्मारादिदोषरहिताविति कुलमग्रे प्रथमं परीक्षेत। कथं। ये मातृतः पितृतश्चेति यथोक्तं पुरस्तात्। †'ये मातृतः पितृतश्च दशपुरुषं समनुष्ठितविद्यातपोभ्यां पुण्यैश्च कर्मभिर्येषामुभयतो वा ब्राह्मण्यं निनयेयुः पितृतश्चैके' इति। अग्रेवचनं बधूवरगुणेभ्यः कुलमेव प्रधानं स्यात् इत्येवमर्थं ॥ १ ॥

अथ वरगुणमाह।

**बुद्धिमते कन्यां प्रयच्छेत् ॥ २ ॥**

अर्थदर्शिनी बुद्धिः। कोऽर्थः। यः शास्त्राविरुद्धः। तद्वते बुद्धिमते कन्यां प्रयच्छेत्॥ २ ॥

अथ कन्यागुणमाह।

**बुद्धिरूपशीललक्षणसम्पन्नामरोगामुपयच्छेत ॥ ३ ॥**

बुद्धिरूपशीललक्षणैर्युक्तां रोगवर्जितां कन्यामुपयच्छेत स्वीकुर्यात्। यत्र स्वमनो रमते तद्रूपं ॥ ३ ॥

लक्षणानां दुरवगाहत्वं मत्वा परीक्षान्तरमाह।

**दुर्विज्ञेयानि लक्षणानीति ॥ ४ ॥**

लक्षणानि दुर्ज्ञेयानीति कृत्वा एवं परीक्षेत ॥ ४ ॥

---

* कुलशब्देनेत्यादिरहिताविति पर्यन्तं सो॰ आदर्शपु॰ नास्ति।

† [illegible]

अष्टौ पिण्डान् कृत्वा ऋतमग्रे प्रथमं जज्ञ ऋते सत्यं प्रतिष्ठितं यदियं कुमार्यभिजाता तदियमिह प्रतिपद्यतां यत् सत्यं तद्दृश्यतामिति पिण्डानभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति ॥ ५ ॥

क्षेत्रादिभ्योऽष्टभ्यो मृदमाहृत्याऽष्टौ पिण्डान् कृत्वा 'ऋतमग्रे' इत्यनेन मृत्पिण्डानभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति। पुनःपिण्डग्रहणं कुमार्या अभिमन्त्रणं माभूत्। सापि हि द्वितीया निर्दिष्टा ॥ ५ ॥

क्षेत्राच्चेदुभयतःसस्याद्गृह्णीयादन्नवत्यस्याः प्रजा भविष्यतीति विद्याद्गोष्ठात् पशुमती वेदिपुरीषाद्ब्रह्मवर्चस्विन्यविदासिनो ह्रदात् सर्वसम्पन्ना देवनात्कितवी चतुष्पथाद्द्विप्रव्राजिनीरिणादधन्या श्मशानात् पतिघ्नी ॥ ६ ॥ ॥ ५ ॥

उभयतःसस्यात् क्षेत्रादाहृतं मृत्पिण्डं गृह्णीयात् चेत् अस्याः प्रजा अन्नवती भविष्यतीति विद्यात्। एवमुत्तरत्रापि नेयं। यदेकस्मिन् संवत्सरे द्विः फलति तदुभयतःसस्यं क्षेत्रं। अपवृत्ते कर्मणि या वेदिस्तस्याः पुरीषं। अविदासिह्रदो नामाऽशोष्यं ह्रदं। देवनं द्यूतस्थानं। यत्रोप्तबीजं न प्ररोहति तदिरिणं। द्वौ प्रव्रजतीति

दिप्रव्राजिनी। स्वैरिणीति यावत्। पतिं हन्तीति पतिघ्नी। अत्र प्रजास्तुतिनिन्दाद्वारेण सैव स्तुता निन्दिता चेति मन्तव्यं। उत्तरैस्त्वभिर्वाक्यैः सैव निन्द्यते ॥ ६ ॥

इति प्रथमे पञ्चमी कण्डिका ॥०॥

अलंकृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो विवाहः। तस्यां जातो द्वादशावरान् द्वादश परान् पुनात्युभयतः। ऋत्विजे वितते कर्मणि दद्यादलंकृत्य स दैवो दशावरान् दश परान् पुनात्युभयतः। सह धर्मं चरत इति प्राजापत्योऽष्टावरानष्ट परान् पुनात्युभयतः। गोमिथुनं दत्त्वोपयच्छेत स आर्षः सप्तावरान् सप्त परान् पुनात्युभयतः। मिथः समयं कृत्वोपयच्छेत स गान्धर्वः। धनेनोपतोष्योपयच्छेत स आसुरः। सुप्तानां प्रमत्तानां वापहरेत् स पैशाचः। हत्वा भित्त्वा च शीर्षाणि रुदतीं रुदद्भ्यो हरेत् स राक्षसः ॥ १ ॥ ॥ ६ ॥

कन्यामलङ्कृत्य उदकपूर्वां दद्यात्। एष विवाहो ब्राह्मसंज्ञो भवति। तस्यां कन्यायां जातो द्वादशाऽवरानुत्पत्स्यमानान् द्वादश परान् पुनाति। उभयतो मातृतः पितृतश्चेत्यर्थः। एवमुत्तरत्रापि नेयं। वितते कर्मणीति वैतानिके कर्मणीत्यर्थः। मिथःसमयकरणं नाम त्वं

मम भार्या भव अहं तव पुरुषो भवामीत्येवंरूपो विवाहो गान्धर्वसंज्ञः । कन्यापित्रे धनदानेन यो विवाहः स आसुरसंज्ञः । सुप्तेभ्यः प्रमत्तेभ्योऽसावधानेभ्यः कन्यामपहृत्य यो विवाहः स पिशाचसंज्ञकः । युद्धं कृत्वा कन्यामपहृत्य यो विवाहः स राक्षससंज्ञकः । एवमेतेऽष्टौ विवाहाः । तत्र पूर्वेषु चतुर्षु पूर्वः पूर्वः प्रशस्तः । उत्तरेषु चतुर्षु उत्तरोत्तरः पापीयान् । तत्र पूर्वा ब्राह्मणस्य । इतरयोः प्रतिग्रहाभावात् आर्त्विज्याभावाच्च । गान्धर्वः क्षत्रियस्य पुराणे दृष्टत्वात् । राक्षसश्च तस्यैव युद्धसंयोगात् । आसुरस्तु वैश्यस्य धनसंयोगात् । इतरे त्रयोऽनियताः ॥ १ ॥

इति प्रथमे षष्ठी कण्डिका ॥०॥

अथ खलूच्चावचा जनपदधर्मा ग्रामधर्माश्च तान्विवाहे प्रतीयात् ॥ १ ॥

अथशब्दोऽधिकारार्थः । यदुच्यते तद्विवाहे वेदितव्यमिति । *खलूक्तः । उच्चावचग्रहणं कथं । एते जनपदधर्मादयो नानाप्रकाराः क्रियेरन् नैकेन कर्त्रा समुच्चेरन्निति । जनपदधर्मा देशधर्माः । ग्रामशब्देन नगरमुच्यते । धर्मशब्दादेव द्वितीयानिर्देशे सति अन्वये सिद्धे तानितिवचनं कुलधर्मा अपि कार्या इत्येवमर्थं । तान् तादृशानित्यर्थः । विवाहाधिकारे पुनर्विवाहग्रहणं कृत्स्ने विवाहे यथा

* खलुरुक्तः इति सं० पु० पाठः । परन्तु खलूक्तिरिति साधुः ।

स्युरित्येवमर्थं। इतरथोपयमनकालादुत्तरकालं विहितत्वादुपयमने न स्युः। उपयमनं नाम कन्यायाः स्वीकरणं। प्रतीयादिति कुर्यादित्यर्थः॥ १॥

**यत् तु समानं तद्वक्ष्यामः॥ २॥**

किमर्थमिदं। यथा अन्यान्युपदेशादेव सर्वत्र भवन्ति पार्वणादीनि तथेदमपि स्यात्। नियमार्थं तर्हि जनपदादिधर्माणां वक्ष्यमाणधर्माणां च विरोधे सति वक्ष्यमाणमेव धर्मं कुर्यात्। जनपदादिधर्ममिति यद्वक्ष्यामस्तत् सर्वत्र समानमेवेत्यर्थः। *वैदेहेषु सद्य एव व्यवायो दृष्टः। †गृह्ये तु 'ब्रह्मचारिणौ त्रिरात्रम्' इति ब्रह्मचर्यं विहितं। तत्र ‡गृह्योक्तमेव कुर्यात् न देशधर्ममिति सिद्धम्॥ २॥

**पश्चादग्नेर्दृषदमश्मानं प्रतिष्ठाप्योत्तरपुरस्तादुदकुम्भं समन्वारब्धायां हुत्वा तिष्ठन् प्रत्यङ्मुखः प्राङ्मुख्या आसीनाया गृह्णामि ते सौभगत्वाय हस्तमित्यङ्गुष्ठमेव गृह्णीयाद्यदि कामयीत पुमांस एव मे पुत्रा जायेरन्निति॥ ३॥**

अग्निप्रतिष्ठापनोत्तरकालं पश्चादग्नेर्दृषदमश्मानं प्रतिष्ठाप्य उत्तरपूर्वदेशे उदकुम्भं प्रतिष्ठापयेत्। तत आज्यस्य बर्हिषि सादनान्तं

* क्वचिद्देशेषु इति सं० पु० पाठः।
† गृह्ये तु इति सं० पु० पाठः।
‡ गृह्योक्तमिति सं० पु० पाठः।

कृत्वा समन्वारब्धायां वध्वां इध्माभ्याधानान्तं कृत्वा ततः पूर्वोक्ता आज्याहुतीर्हुत्वा तिष्ठन् प्रत्यङ्मुखः प्राङ्मुख्या आसीनाया अङ्गुष्ठमेव गृह्णीयात् गृभ्णामीत्युक्त्वा पुत्रकामश्चेत्। मन्त्रस्तूत्तरयोरपि हस्तग्रहणयोर्भवत्येवाय । दृषत् प्रसिद्धा । अश्मा तत्पुत्रकः । तत्रोभयोः प्रतिष्ठापनं सिद्धम्। एवं चेत् दोषः । 'अश्मानमारोहयति' [गृ०१। ७।७] इत्यत्र पुत्रकारोहणं स्यात्। तर्हि अश्मग्रहणं तस्य विशेषणं स्यात्। दृषदमश्मानमिति अश्ममयीमित्यर्थः। मृण्मय्यपि हि लोके दृषद्विद्यते। तर्हि पुत्रकप्रतिष्ठापनं न स्यात्। न। स्यादेव मङ्गलार्थत्वात्। दक्षिणतः पत्न्युपविशेत् उत्तरतः पतिरिति शाखान्तरे दृष्टं। स्रुवेण होमः साधनान्तराऽनुपदेशात्। एवम्भूतोऽयं होमेत्यनेनैवावस्थाने सिद्धे 'तिष्ठन् समिधमादध्याद्' [श्रौ०] इत्यत्र तिष्ठन्-ग्रहणं कथं। अन्यत्रासीनस्य कर्माणि स्युरित्येवमर्थं। ततोऽत्राप्यासीनप्राप्तौ तन्निवृत्त्यर्थं तिष्ठन्-ग्रहणं। प्रत्यङ्मुख इति प्राङ्मुखत्वनिवृत्त्यर्थं। 'तस्य नित्याः प्राञ्चश्चेष्टाः [श्रौ०१।१।८] इत्यनेन प्राङ्मुखत्वे सिद्धे प्राङ्मुख्या आसीनाया इति वचनं प्रत्यङ्मुखाधिकारनिवृत्त्यर्थं। आसीनाया इत्येतत् कथं। इत उत्तरं वध्वा विहितं कर्म तिष्ठन्त्या स्यादित्येवमर्थं। 'उत्तानेनोत्तानं पाणिं गृह्णीयात् नीचेन चोत्तानम्' इति शाखान्तरे दृष्टं। पुत्रशब्दः पुंसि स्त्रियाञ्च स्मृतौ दृष्टः।

'अकृता वा कृता वापि यं विन्देत् सदृशात् सुतं।
पौत्री मातामहस्तेन दद्यात् पिण्डं हरेद्धनं ॥ इति ॥ [मनुः९।१३६]

दौहित्रेण मातामहः पौत्री भवति इत्यर्थः। लोके च दुहि-

तरि पुत्रशब्दं प्रयुञ्जाना दृश्यन्ते एहि पुत्रेति। मन्त्रे च दृश्यते। 'पुमांस्ते पुत्रो जायताम्' इति। तस्मात् पुमांसः पुत्रा इति विशेषणं। अथवा।

पुन्नाम्नो नरकात् यस्मात् पितरं त्रायते सुतः।
तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा॥ इति॥ [मनुः९।१३८]

एवंविधः स पुत्रो जायेत न प्रथमप्रकृतिमात्रमित्येवमर्थमुभयोर्ग्रहणम्॥ ३॥

अङ्गुलीरेव स्त्रीकामः॥ ४॥

एवकारोऽङ्गुष्ठनिवृत्त्यर्थः। स्त्रीकामो दुहितृकाम इत्यर्थः॥४॥

रोमान्ते हस्तं साङ्गुष्ठमुभयकामः॥ ५॥

उभयकामः पुत्रदुहितृकामः अङ्गुष्ठाङ्गुलीभिः सह हस्तं गृह्णीयात्॥ ५॥

प्रदक्षिणमग्निमुदकुम्भञ्च त्रिः परिणयन् जपति। अमोऽहमस्मि सा त्वं सा त्वमस्यमोऽहं द्यौरहं पृथिवी त्वं सामाहमृक् त्वं तावेह विवहावहै प्रजां प्रजनयावहै सम्प्रियौ रोचिष्णू सुमनस्यमानौ जीवेव शरदः शतमिति॥ ६॥

अग्निमुदकुम्भञ्च त्रिःप्रदक्षिणं वधूः स्त्रीः परिणयन् जपति।

अमोऽहमस्मीति। उदकुम्भग्रहणमन्येषां यज्ञपात्राणां बहिःकरणार्थमित्येके। अन्ये तु विवाहे यदन्यद् दृष्टं पात्रं अस्मात् तस्यैव बहिःकरणार्थमिति। निर्ग्रहणं परिणयनेन सम्बध्यते उत जपेन। यदि पूर्वेण तर्हि सकृज्जपः स्यात्। अथ जपेन तर्हि सकृत् परिणीतिः। पूर्वेणेति ब्रूमः। कुतः। परिणीय परिणीयेति तस्य बहुत्वं दर्शितं। जपस्य परिणयाङ्गमिति कृत्वा यावत् परिणयनमावर्तते॥ ६॥

परिणीय परिणीयाश्मानमारोहयतीममश्मानमारोहाश्मेव त्वं स्थिरा भव। सहस्व पृतनायतोऽभितिष्ठ पृतन्यत इति॥ ७॥

वीप्सावचनं सर्वपरिणयनेष्वश्मानमारोहणं कारयितव्यमित्येतदर्थं। अथास्य कर्मणः कः कर्ता। आचार्यः। कुतः। वक्ष्यति। 'शिरसो उदकुम्भेनावसिच्य' [गृ०१.७.२०] इति। स्वयंकर्तृत्वे सति अवसेचनं कर्तुं न शक्यते। तदसत्। *आचार्येण ह्ययं विसृष्टो विवाहं करोति। उदकुम्भग्रहणन्तु तत्रस्थमुदकुम्भं लक्षयति॥ ७॥

वध्वञ्जला उपस्तीर्य भ्राता भ्रातृस्थानो वा द्विर्लाजानावपति॥ ८॥

ततो वध्वञ्जलौ उपस्तीर्य वध्वा भ्रात्रादिर्द्विर्लाजानावपति। वरो जामदग्न्यश्चेत्त्रिः। ततः शेषं प्रत्यभिघार्य अवदानं च प्रत्य-

* वर एव कर्त्ता आचार्येणेत्ययं पाठः सं० पु० वर्त्तते।

भिघारयति। एवमवदायावदाय त्रिभिर्मन्त्रैर्जुहोति। भ्रातृस्थान: पितृव्यपुत्रो मातुलपुत्रश्च ॥ ८॥

## त्रिर्जामदग्न्यानां ॥ ९ ॥

पञ्चावत्तिनामित्यर्थः ॥ ९ ॥

## प्रत्यभिघार्य हविः ॥ १० ॥

हवि:शब्दः शेषे वर्तते। यथा नात्र हवींषीति॥ १० ॥

## अवत्तञ्च ॥ ११ ॥

अवदानमित्यर्थः। उपस्तरणाभिघारणे कः करोति। भ्राता। कुतः। समानकर्तृत्वनिर्देशात्। तदयुक्तं। यदि ह्यत्र भ्राताऽभिप्रेतः स्यात् वध्वञ्जलौ भ्रातोपस्तीर्येत्येवावक्ष्यत्. तस्माद्वर एव करोति। यत्तूक्तं समानकर्तृत्वनिर्देशादिति। तत्र ब्रूमः। असमानकर्तृकत्वेऽपि हि क्त्वाप्रत्ययो दृश्यते। यथा 'आज्याहुतिं हुत्वा मुख्यं धनं दद्याद्' इति होमे ब्रह्मा कर्ता. दाने यजमानः इत्यादिषु पूर्वकालता-मात्रमेव विवक्षितं तद्वदत्रापि॥ ११ ॥

## एषोऽवदानधर्मः ॥ १२ ॥

यत्र यत्रावदानमस्ति तत्र तत्रैष धर्मो भवतीत्यर्थः। मध्यात् पूर्वार्धाच्च हविषोऽवद्यतीत्यादौ ॥ १२ ॥

अर्यमणं नु देवं कन्या अग्निमयक्षत. स इमां देवो अर्यमा प्रेतो मुञ्चातुनामुतः स्वाहा । वरुणं नु देवं कन्या अग्निमयक्षत. स इमां देवो वरुणः प्रेतो मुञ्चातुनामुतः स्वाहा । पूषणं नु देवं कन्या अग्निमयक्षत. स इमां देवः पूषा प्रेतो मुञ्चातुनामुतः स्वाहेत्यविच्छिन्दत्यञ्जलिं स्रुचेव जुहुयात् ॥ १३ ॥

को जुहोति । वधूः । कुतः । अविच्छिन्दत्यञ्जलिमिति स्त्रीलिङ्गनिर्देशात् । कस्यैते मन्त्राः । वध्वाः । कुतः सा हि जुहोति. मन्त्रलिङ्गात्. कन्या अग्निमयक्षतेति । तदसत् । नहि स्त्रीणां मन्त्रेष्वधिकारोऽस्ति । ननु. कथं पत्नीवाचने । तत्र वचनमस्ति. अत्र तु सन्दिग्धं । तस्मात् वरस्य मन्त्राः । मन्त्रलिङ्गाच्च. स इमां देव इति हि परोक्षनिर्देशः । यदि हि वध्वाः स्युः स इमां देव इति न स्यात् । यत्तूक्तं साहि जुहोतीति । तत्र ब्रूमः । अन्यस्याऽपि मन्त्रो दृश्यते । अध्वर्युर्जुहोति होता वषट्करोति । यत्तूक्तं मन्त्रलिङ्गादिति । तत्र ब्रूमः । न ह्यत्रेयं कन्याऽभिधीयते. अन्या एव तु कन्याः । यदीयमभिधीयते बहुवचनं नोपपद्यते । तथाभूतस्य प्रत्ययः । तस्मात् वरस्येति सिद्धं ॥ १३ ॥

अपरिणीय शूर्पपुटेनाभ्यात्मं तूष्णीं चतुर्थं ॥ १४ ॥

अप्राप्तनिषेधः किमर्थः । चतुर्थहोमं कृत्वा कथममन्त्रकं परिणयनं स्यादित्येवमर्थमित्येके । अन्ये तु त्रीणि परिणयनान्यान-

न्तर्येणोक्तानि. तत्र त्रयो होमाः. तत्र कथं पूर्वं पूर्वं परिणयनं कृत्वा पश्चात् होमः स्यादिति ज्ञापयितुमिति। शूर्पपुटः कोणः। तूष्णींवचनं प्रजापतिज्ञापनार्थं। चतुर्थग्रहणं कथं। एतस्य द्रव्यस्य स्विष्टकृतं न स्यात्. स एव च कर्ता यथा स्यादिति। तेन वधूर्जुहोति॥ १४ ॥

**आप्योप्य हैके लाजान् परिणयन्ति तथोत्तमे आहुती न सन्निपततः॥ १५ ॥**

अभिमतार्थज्ञापनार्थो हशब्दः। एके लाजानोप्योप्य पश्चात् परिणयन्ति। किमिति। तथा सत्युत्तमे आहुती न सन्निपतत इति कृत्वा। पूर्वस्मिंस्तु पक्षे उत्तमे आहुती सन्निपततः। कोऽयं सन्निपातो नाम यदि पूर्वाहुतिशिरसि प्रक्षेपः। न तर्हि क्वचिदप्यसाविष्यते. किं पुनः पूर्वस्मिन् पक्षे। अथानन्तर्यं। न. तर्ह्यसौ दोषः। पार्वणादौ दृष्टत्वात्। तस्मादयमर्थः। यथोत्तमे आहुती न सन्निपततस्तथा कर्तव्यम्। उत्तमयोराहुत्योर्मध्ये परिणयनं कर्तव्यमित्यर्थः। कथं वा न स्यात्. अपरिणीय शूर्पपुटेनाभ्यात्मिति। अन्यार्थं कृतमपीह मध्ये परिणयनं निवर्तयेत्. अथ वा पूर्वस्मिन् पक्षे उत्तमे सन्निपततः। अत्र तु न सन्निपतत इति वदन् अपरिणीय-वचनं चतुर्थपरिणयनार्थमित्यस्मिन्नपि पक्षे पूर्वं परिणयनं कृत्वा पश्चात् होमः. न चानन्तर्येण होम. इति ज्ञापयति। यदि त्वानन्तर्येण होमः स्यात् सर्वासामेव सन्निपातादुत्तमयोराहुत्योः पूर्वस्मिन् पक्षे सन्निपात इति नोपपद्यते॥ १५ ॥

अथास्यै शिखे विमुञ्चति यदि कृते भवतः॥ १६ ॥

अथशब्द इदानीं खिष्टकृन्निवृत्त्यर्थः। *अस्या इति वरस्य निवृत्त्यर्थः। यदीत्यनित्ये। †देशधर्मादिना यदि कृते भवतः। के कृते भवत इत्याह॥ १६ ॥

ऊर्णास्तुके केशपक्षयोर्बद्धे भवतः। प्र त्वा मुञ्चामि वरुणस्य पाशादिति॥ १७ ॥

प्र त्वा मुञ्चामीति दक्षिणां शिखां विमुञ्चति॥ १७॥

उत्तरामुत्तरया॥ १८ ॥

प्रेतो मुञ्चामीत्युत्तरां शिखां विमुञ्चति। वरस्य तु शिखे तूष्णीं विमुञ्चति॥ १८ ॥

अथैनामपराजितायान्दिशि सप्तपदान्यभ्युत्क्रामयतीष एकपदूर्जे द्विपदी रायस्पोषाय त्रिपदी मायोभव्याय चतुष्पदी प्रजाभ्यः पञ्चपदृतुभ्यः षट्पदी सखा सप्तपदी भव सा मामनुव्रता भव. पुत्रान्विन्दावहै बहूंस्ते सन्तु जरदष्टय इति॥ १९ ॥

अथशब्दः पूर्वेण तुल्यः। एनां वधूं. अपराजिता प्रागुदीची. तत्र सप्तपदान्यभ्युत्क्रामयति वधूं सप्तभिर्मन्त्रैः। वाक्यस्य साकाङ्क्ष-

* अस्ये अस्या इत्यर्थ। वरनिवृत्त्यर्थञ्चैतदिति सं० पु० पाठः।
† यदि कृते भवत इति ग्रामादिधर्माणामनियतत्वादिति सं०पु०पाठः।

F

त्वात् भवादेश्च योग्यत्वात् सन्निहितत्वाच्च प्रत्येकं सम्बध्यते। यथा रहस्ये उल्लिखामीति शब्दः 'प्राणाय त्वापानाय त्वा व्यानाय त्वोल्लिखामि' इत्यन्त्ये वाक्ये पठितोऽपि पूर्वत्रापि सम्बध्यते. तद्वदत्रापि। ऐतरेयिभिरप्युक्तं. 'भवादि सर्वत्र समानं' इति। तेन इष एकपदी भव। सा मामनुव्रता भवेति सर्वत्र सम्बन्धनीयम्॥ १९ ॥

**उभयोः सन्निधाय शिरसी उदकुम्भेनावसिच्य ॥ ॥ २० ॥**

सप्तमे पदे अभ्युत्क्रामिते तत्रस्थ एवोभयोः शिरसी सन्निधाय केनचिदुदकुम्भमानाय्य तत्रस्थेनोदकेन शिरसी अवसिञ्चति। अथाज्येन स्विष्टकृतं जुहोति॥ २० ॥

**ब्राह्मण्याश्च वृद्धाया जीवपत्न्या जीवप्रजाया अगार एतां रात्रिं वसेत् ॥ २१ ॥**

ग्रामान्तरगमने यद्यन्तरा वसतिः स्यात् तदा एवंगुणयुक्तायाः ब्राह्मण्या गृहेऽनन्तरां रात्रिं वसेत्. वसतिं कुर्यादित्यर्थः। स्वग्रामे विवाहश्चेन्नायं विधिः॥ २१ ॥

**ध्रुवमरुन्धतीं सप्तऋषीनिति दृष्ट्वा वाचं विसृजेत जीवपत्नीं प्रजां विन्देयेति ॥ २२ ॥ ॥ ७ ॥**

समाप्ते होमे रात्रौ ध्रुवादीन् दृष्ट्वा वाचं विसृजेत 'जीवपत्नीं' इति मन्त्रेण। इदानीं वाग्विसर्जनविधानात् होमादारभ्य

एतावन्तं कालं वाचो नियम इति गम्यते। कस्यायं वाग्विसर्गः। वध्वाः। कुतः। मन्त्रलिङ्गात्। तथा हि। जीवः पतिर्यस्याः सा जीवपत्नी। जीव इति कर्तरि पचाद्यच्। 'पत्युर्नो यज्ञसंयोगे' [पा० ४।१।३३] 'विभाषा सपूर्वस्य' [पा० ४।१।३४] इति ङीप्-प्रत्ययो नश्चान्तादेशः॥ २२॥

इति प्रथमे सप्तमी कण्डिका॥०॥

---

**प्रयाण उपपद्यमाने, पूषा त्वेतो नयतु हस्तगृह्येति, यानमारोहयेत्॥ १॥**

विवाहहोमानन्तरं स्वगृहं गन्तव्यं। तत्र यदि ग्रामान्तरे गृहं स्यात्, तथा सति तत्र प्रयाणे यदि यानमुपपद्यते, तथा सत्युपपद्यमाने याने यानमारोहयेत् वधूं मन्त्रेण। तेन प्रयाणे यानस्याऽनियमः। यानादन्येन शिविकादिना प्रयाणे च न भवति मन्त्रः। स्वग्रामविवाहपक्षे स्वगृहगमने नायं विधि.॥ १॥

**अश्मन्वतीरीयते संरभध्वमित्यर्द्धर्चेन नावमारोहयेत्॥ २॥**

यद्यन्तरा नाव्या नदी स्यात् तदाऽनेनार्द्धर्चेन नावमारोहयेत्, वधूमिति शेषः॥ २॥

## उत्तरेणोत्क्रमयेत् ॥ ३ ॥

उत्तरेणार्द्धर्चेन. अत्राजहामेत्यर्द्धर्चेन वधूमुदकदुत्तारयेत्॥३॥

## जीवं रुदन्तीति रुदत्यां ॥ ४ ॥

नीयमाना वधूः यदि रोदिति बन्धुवियोगात् तदा एता-ञ्जपेत्। अयं विधिः स्वग्रामेऽपि भवत्यविशेषात्॥ ४ ॥

## विवाहाग्निमग्रतोऽजस्रन्नयन्ति ॥ ५ ॥

विवाहाग्निग्रहणं अग्निविशेषनियमाभावशङ्कानिवृत्त्यर्थं। अज-स्रग्रहणं भ्रियमाणस्य *नयनार्थं। तेनान्यत्र प्रयाणे समारोपणं †कृत्वा नयनं गम्यते। अयञ्च विधिः स्वग्रामेऽपि भवत्यविशेषात्॥ ५॥

## कल्याणेषु देशवृक्षचतुष्पथेषु, माविदन् परिपन्थिन इति जपेत्॥ ६ ॥

कल्याणेषु विवाहादिशोभनेषु देशवृक्षचतुष्पथेषु एताञ्ज-पेत्॥ ६ ॥

## वासे वासे सुमङ्गलीरियं वधूरितीक्षकानीक्षेत ॥ ७॥

वसतौ वसतौ ईक्षकाः सन्ति चेत् तानेतया ईक्षेत। वासाद-न्यत्रेक्षणे मन्त्रः। वीप्सावचनं प्रतिवसतौ मन्त्रप्राप्त्यर्थं॥ ७ ॥

---

* नियमार्थमिति सं० पु० पाठः।

† कृत्वा नयनमित्यत्र कुर्यादिति सं० पु० पाठः।

इह प्रियं प्रजया ते समृध्यतामिति गृहं प्रवेशयेत् ॥ ८ ॥

अनया वधूं गृहं प्रवेशयेत्। इदमाद्यो विधयः स्वग्रामेऽपि विवाहे भवन्ति ॥ ८ ॥

विवाहाग्निमुपसमाधाय पश्चादस्याऽऽनडुहं चर्मास्तीर्य प्राग्ग्रीवमुत्तरलोम तस्मिन् उपविष्टायां समन्वारब्धायाम्, आ नः प्रजां जनयतु प्रजापतिरिति चतसृभिः प्रत्यृचं हुत्वा, समञ्जन्तु विश्वेदेवा इति दध्नः प्राश्य प्रतिप्रयच्छेदाज्यशेषेण वानक्ति हृदये ॥ ९ ॥

अग्निप्रणयनान्तं कृत्वाऽग्निमुपसमादधाति, समिधः प्रक्षिप्य प्रज्वलयतीत्यर्थः। ततः पश्चादस्याऽऽनडुहं चर्मास्तृणाति, प्राग्ग्रीवमुत्तरलोम ऊर्द्ध्वलोम, ततोऽन्वाधानाद्याज्यस्य बर्हिषि सादनान्तं कृत्वा तस्मिन् चर्मण्युपविष्टायां समन्वारब्धायां वध्वां, इध्माधानाद्याज्यभागान्तं कृत्वा, आ नः प्रजामिति चतसृभिः प्रत्यृचं हुत्वा, ततः समञ्जन्त्वित्यृचा दध्न एकदेशं स्वयं प्राश्य वध्वै प्राशनार्थं शिष्टं दधि प्रयच्छेत्। सा तु तूष्णीं प्राश्नाति। सकृत् प्रयुक्तस्य मन्त्रस्य उभयप्राशनार्थत्वात् उभयार्थत्वम्, नाविति द्विवचनात्। आज्यशेषेण वा उभयोर्हृदये अनक्ति, तेनैव मन्त्रेण। हृदये अत ऊर्द्ध्वमिति विकृत्या पाठः कार्यः, प्रगृह्यत्वात्। ततः स्विष्टकृतादि समा-

पयेत्। विवाहाग्निग्रहणं अन्यनिवृत्त्यर्थं। कथं पुनरन्याग्निप्राप्तिशङ्का. 'गृह्याणि वक्ष्यामः' [गृ० १।१।१] इति प्रतिज्ञातम्। उच्यते। दायविभागकाले अग्निः परिगृह्यते चेत्. अत्राप्यन्योऽग्निः प्रसज्येत. तन्निवृत्त्यर्थमिदं। अपि चात्र विवाहाग्निग्रहणात् न विवाहहोममात्रेण अग्नेर्गृह्यत्वसिद्धिः किन्तर्हि गृहप्रवेशनीयहोमे कृते। एवमुभाभ्यां होमाभ्यां गृह्यत्वसिद्धिः नैकेनेति ज्ञायते। तेन गृहप्रवेशनीयहोमादर्वाक् दर्शपूर्णमासप्राप्तौ पार्वणस्थालीपाको न कार्यः। परिचरणहोमस्तु कार्य एव. 'पाणिग्रहणादि' [गृ० १।९।१] इति वचनात्। वैश्वदेवं च कार्यमेव. तस्याग्निविशेषविध्यभावात्। तेनाग्निनाशे होमद्वयं कार्यमिति सिद्धं। उपसमाधायेति आस्तरणकालोपदेशार्थं। अथवा समानकर्तृकत्वसिद्ध्यर्थं. तेन यत्रोपसमाधानग्रहणं नास्ति तत्राऽन्यो वोपसमाधानं कुर्यात्। तस्मिन्निति वचनं चर्मास्तरणानन्तरं *तन्त्रान्तरमितिज्ञापनार्थं। प्रत्यृचग्रहणं कथं. ऋगन्ते होमः स्यात् न स्वाहाकारान्त इत्येवमर्थं। स्वाहाकारं पठन् जुहुयादित्यर्थः। तेन यत्र प्रत्यृचग्रहणं नास्ति तत्र स्वाहाकारं कृत्वा पश्चात् होमः। आज्यशेषेण वेति सिद्धवदुपदेशात् अनादेशे आज्येन होम इति गम्यते॥ ९॥

**अक्षारालवणाशिनौ ब्रह्मचारिणावलंकुर्वाणावधःशायिनौ स्यातां॥ १०॥**

विवाहादारभ्य एते नियमा भवन्त्युभयोः।

---

* तन्त्रान्तरमित्यस्य स्थाने अङ्गान्तरं कर्त्तव्यमिति सं० पु० पाठः।

*हैडिम्बिका राजमाषा माषा मुद्गा मसूरिकाः।
लङ्का ढक्काश्च निष्पावास्तिलाद्याः क्षारसंज्ञिताः॥

गृहप्रवेशीयहोमात् प्रागपि नियमानामिष्टत्वात् योगविभागः
[कृ]तः॥ १० ॥

उत्तरावधिमाह।

†अत ऊर्द्ध्वं त्रिरात्रं द्वादशरात्रं॥ ११ ॥

अतो गृहप्रवेशनीयहोमादूर्द्ध्वं त्रिरात्रं द्वादशरात्रं वा नि-
[य]तौ स्यातां॥ ११ ॥

संवत्सरं वैक ऋषिर्जायत इति॥ १२ ॥

संवत्सरं वा नियतौ स्यातां एक ऋषिकल्पः पुत्रो जायत इति
[कृ]त्वा। अन्ये त्वाहुः. व्रतान्ते एक ऋषिः सम्पद्यते. पितृगोत्रं
[वि]हाय पतिगोत्रं भजत इत्यर्थः॥ १२ ॥

चरितव्रतः सूर्याविदे वधूवस्त्रं दद्यात्॥ १३ ॥

व्रतानन्तरं सूर्याविदे वध्वा उपयमनकाले उपहितं वस्त्रं
[द]द्यात्। सूर्यया दृष्टो मन्त्रः सूर्या. यथा वृषाकपिरिति. सा च
[स]प्तर्च्चेनोक्तमितेति सूक्तं। कथं तत् पुनरसौ वेत्ति. स्वरतो वर्णत
[इ]त्यादि॥ १३ ॥

---

* हैडीति कारिका सं० पु० नास्ति।

† अत ऊर्द्धमिति पदद्वयं सो० मू० पु० नास्ति।

अन्नं ब्राह्मणेभ्यः ॥ १४ ॥

दद्यादिति शेषः ॥ १४ ॥

अथ स्वस्त्ययनं वाचयीत ॥ १५ ॥ ॥ ८ ॥

ॐ स्वस्ति भवन्तो ब्रुवन्त्विति । ते च ॐ स्वस्तीति प्रत्यूचुः ॥ १५ ॥

इति प्रथमे अष्टमी कण्डिका ॥ ० ॥

---

पाणिग्रहणादि गृह्यं परिचरेत्स्वयं पत्न्यपि वा पुत्रः कुमार्यन्तेवासी वा ॥ १ ॥

पाणिग्रहणप्रभृति गृह्यमग्निं परिचरेत् स्वयं पत्न्यादयो वा। पाणिग्रहणादिवचनं गृहप्रवेशनीयहोमानन्तरकाले प्रारम्भाशङ्कानिवृत्त्यर्थं। यद्विधास्यते तत्परिचरणं। *पत्नीकुमार्यौ न होमकर्म कुर्यातामित्येके। कुतः। स्त्रीणां मन्त्राऽनधिकारात्। अन्ये तु सहोमकं। कुतः। वचनात्। पत्नीसन्नहनवत्। अन्तेवासी शिष्यः ॥ १ ॥

नित्यानुगृहीतं स्यात् ॥ २ ॥

अनुशब्दः परिशब्दस्य स्थाने। नित्यं परिगृहीतं स्यादित्यर्थः। किमुक्तं भवति। यदि विवाहाग्निर्नष्टः स्यात् ततो नष्टाहरणप्रा-

* पत्नीकुमार्योरहोमकमेके इति सं० पु पाठः।

यश्चित्तं कृत्वा परिचरेदिति। अथवा आत्मनः पत्न्या वा समीपे कथं नित्यः स्यात् नोभयोरन्यतरः स्थापयितव्य इति। अथवा होमद्रव्यस्योपलेपनादेर्निवृत्त्यर्थं। तदपि हि कायग्रहणेन प्राप्नोति. परिसमूहनादिवत्॥ २॥

## यदि तूपशाम्येत्पत्न्युपवसेदित्येके॥ ३॥

यदि प्रादुष्करणकाल उद्वायेत् ततः अन्यस्मात् होमकालात् पत्न्युपवसेदित्येके। एके-ग्रहणात् यजमान उपवसेदित्येके। अयाश्चाग्न इत्येकामाहुतिं जुहुयात् इत्येके। कुतः। शास्त्रान्तरे दर्शनात्। अन्ये तु पूर्वसूत्रमेवं व्याचख्युः। नित्यशब्द उक्तार्थः. नित्यमाचमनमिति यथा। अनुशब्दः पश्चाद्वचनः। एतदुक्तं भवति. यदि वैवाह्यो न गृहीतो दायविभागकाले गृह्यते। गृहीतोऽपि नष्टो वा द्वादश-रात्रमतिक्रान्तः. तत उक्तया क्रियया पश्चात् गृहीतो भवतीति। तत्र विवाहाज्याहुती लाजाहुती गृहप्रवेशनीयाज्याहुतयश्च हृदया-लम्भनं च भवति नान्यत्. कन्यासंस्कारत्वात्। होमद्वयं चात्र समान-तन्त्रं स्यात्। लाजहोमोऽपि पत्न्यञ्जलिना कार्यः। तद्धोमे तस्य साधनत्वेन दृष्टत्वात्। लाजावपनं तु स्वयमेव करोति न भ्राता। दायविभागकाले गृह्यमाणे प्रयोगविशेषोऽन्वेष्यः॥ ३॥

## तस्याग्निहोत्रेण॥ ४॥

तस्य-ग्रहणं *योगविभागार्थं। तस्याग्निहोत्रेणैव विधिर्भवति नान्येन। तेन पाकयज्ञतन्त्रं न भवति. तर्हि प्राशनादयोऽपि स्युरि-त्याशङ्क्याह॥ ४॥

---

* नियमार्थमिति सं० पु० पाठः।

## प्रादुष्करणहोमकालौ व्याख्यातौ ॥ ५ ॥

प्रादुष्करणं नाम अपराह्णे गार्हपत्यं प्रज्वाल्येति. एवं प्रातर्व्युष्टायामिति च. प्रदोषान्तो होमकालः सङ्गवान्तः प्रातरिति । एतावेव भवतो नान्यदित्यर्थः ॥ ५ ॥

## हौम्यं च मांसवर्जम् ॥ ६ ॥

हौम्यं चाग्निहोत्रेण व्याख्यातं। पयसा नित्यहोम इत्यादि पञ्च द्रव्याण्याम्नातानि। मांसवर्जमिति मांसप्रतिषेधात् शास्त्रान्तरे दृष्टमपि हौम्यं भवतीति गम्यते।

पयो दधि यवागूश्च सर्पिरोदनतण्डुलाः।
सोमो मांसं तथा तैलमापस्तानि दशैव तु॥

द्रवद्रव्याणि स्रुवेण जुहोति। कठिनानि तु पाणिना। येन द्रव्येण सायं जुहोति तेनैव प्रातः प्रतिनिधिवर्जम्॥ ६ ॥

## कामं तु व्रीहियवतिलैः ॥ ७ ॥

कामवचनं पूर्वालाभावे कथमेतेषां ग्रहणं स्यात् इत्येवमर्थं। व्रीह्यादयश्च प्रत्येकं साधनानि. न मिश्राणि। तच्च न्यायतोऽवगन्तव्यम्॥ ७ ॥

## अग्नये स्वाहेति सायं जुहुयात् सूर्याय स्वाहेति प्रातस्तूष्णीं द्वितीये उभयत्र ॥ ८ ॥ ॥ ९ ॥

तूष्णीं द्वितीये आहुती जुहोति। तूष्णींवचनं प्रजापतिध्यानार्थं।

भयत्र सायं प्रातश्चेत्यर्थः। अग्निं परिसमूह्य परिस्तीर्य पर्युक्ष्य
ामद्रव्यस्याऽग्निहोत्रवन्तूष्णीं संस्कारं कृत्वा ततोऽग्नये स्वाहेति जुहो-
ि. ततः प्रजापतय इति चतुर्थ्यन्तं शब्दरूपं ध्यात्वा स्वाहेत्युपांशूक्ता
ितीयाहुतिं जुहोति। ततः परिसमूहनपर्युक्षणे। एवं सायं।
ातर्होमे तु पूर्वमन्त्रस्थाने सूर्याय स्वाहा इति विशेषः॥ ८॥

इति प्रथमे नवमी कण्डिका॥०॥

## अथ पार्वणस्थालीपाकः॥ १॥

उक्तोऽर्थः। पर्वणि भवः पार्वणः। स्थालीपाक इति कर्मनाम-
ेयं। दर्शपूर्णमासातिदेशात् काले सिद्धे पार्वणवचनं पाणिग्रह-
ाद्यहरहःक्रियाशङ्कानिवृत्त्यर्थं। विवाहादनन्तरं या पौर्णमासी
स्यामस्य प्रथमआरम्भः। प्रतिपद्योपासनं कृत्वा ततः परिसमूहना-
दि प्रारभेत॥ १॥

## तस्य दर्शपूर्णमासाभ्यामुपवासः॥ २॥

तस्य-ग्रहणं नियमार्थं। तस्यैवोपवासो यथा स्यात् तदतिदि-
ानां माभूदिति. दर्शपूर्णमासाविति कर्मनामधेयम्। उपवास इत्ये-
भोजनं। सर्पिर्मिश्रं दधिमिश्रं अक्षारलवणमशितव्यमित्यादयश्च
ियमा लभ्यन्ते। तस्य ताभ्यामुपवासो व्याख्यात इत्यर्थः॥ २॥

ब्राह्मणान् भोजयित्वा वेदसमाप्तिं वाचयीत ॥१६॥

संस्थाजपान्तं कृत्वा ब्राह्मणान् भोजयित्वा वेदसमाप्तिं भवन्तो ब्रुवन्त्विति ब्रूयात्. ते च वेदसमाप्तिरस्त्विति ब्रूयुः ॥ १६ ॥

अत ऊर्ध्वमक्षारलवणाशी ब्रह्मचार्यधःशायी त्रि-रात्रं द्वादशरात्रं संवत्सरं वा ॥ १७ ॥

अत ऊर्द्धमिति कस्मात्. पूर्वेण सम्बन्धकरणार्थम्। प्रयोजनमुपरिष्टाद्वक्ष्यामः। ब्रह्मचारिवचनमाचार्यनिवृत्त्यर्थम्॥ १७ ॥

चरितव्रताय मेधाजननं करोति ॥ १८ ॥

चरितव्रतायेतिवचनं मेधाजननेन व्रतस्य सम्बन्धार्थं। यत्रोपनयने मेधाजननमस्ति तत्रैव व्रतचर्या। यत्र व्रतचर्या तत्रैवानुप्रवचनीयम्। उपनीतपूर्वस्य मेधाजननाभावे त्रितयमपि निवर्तते ॥ १८ ॥

अनिन्दितायान्दिश्येकमूलं पलाशं कुशस्तम्बं वा पलाशापचारे प्रदक्षिणमुदकुम्भेन त्रिः परिषिञ्चन्तं वाचयति. सुश्रवः सुश्रवा असि यथा त्वं सुश्रुवः सुश्रुवा अस्येवं मां सुश्रवः *सुश्रवसं कुरु। यथा त्वं देवानां यज्ञस्य निधिपोऽस्येवमहं मनुष्याणां वेदस्य निधिपो भूयासमिति ॥ १९ ॥

* सौश्रवसमिति केवलमूले।

इदं मेधाजननं। तिस्रो निन्दिता दिशः। दक्षिणा. प्रागदक्षिणा. प्रत्यगदक्षिणेति। अन्याः सर्वा अनिन्दिताः। तस्यां दिश्येकमूलं पलाशं कुशस्तम्बं वा। पलाशाभावे प्रदक्षिणमुदकुम्भेन त्रिः परिषिञ्चन्तं ब्रह्मचारिणं वाचयति 'सुश्रवः' इति मन्त्रम्। एकमूलमशाखमित्यर्थः। पुनः पलाशग्रहणमनेकमूलस्याप्यभावे कुशस्तम्बं परिषिञ्चेदिति ॥ १८ ॥

## एतेन वापनादिपरिदानान्तं व्रतादेशनं व्याख्यातम् ॥ २० ॥

व्रतादेशनं यदस्माभिर्व्याख्यातं संवत्सरावमं चारयित्वा 'व्रतमनुयुज्य' इति 'संवत्सरमादिशेत्' इति च। तत्राप्येतेन प्रकारेण वापनादि परिदानान्तं कार्यमित्यर्थः। वापनादिग्रहणमलङ्कारनिवृत्त्यर्थं। 'काय त्वा परिददामि' [गृ० १.२०.७] इत्येतत्परिदानं। परिदानान्तवचनमुपरितनतन्त्रनिवृत्त्यर्थं ॥ २० ॥

## इत्यनुपेतपूर्वस्य ॥ २१ ॥

एतदुपनयनविधानमनुपेतपूर्वस्य. उत्तरविवक्षयेदमारभ्यते ॥ ॥ २१ ॥

## अथोपेतपूर्वस्य ॥ २२ ॥

अनन्तरमुपेतपूर्वस्य विशेषं वक्ष्यामः ॥ २२ ॥

**हताहतं केशवपनं मेधाजननं च ॥ २३ ॥**

हताहतमिति वर्तते ॥ २३ ॥

**अनिरुक्तं परिदानम् ॥ २४ ॥**

परिदानमनिरुक्तमिति न भवतीत्यर्थः ॥ २४ ॥

**कालश्च ॥ २५ ॥**

उदगयनादिरनिरुक्तः ॥ २५ ॥

**तत्सवितुर्वृणीमह इति सावित्रीं ॥ २६ ॥ ॥ २२ ॥**

पूर्वस्याः सावित्र्याः स्थाने एतां सावित्रीं प्रयुञ्जीत । प्रायश्चित्तत्वेन पुनरुपनयनप्राप्तौ एवं कुर्यात् ॥ २६ ॥

इति प्रथमे द्वाविंशतितमा कण्डिका ॥ ०॥

# BIBLIOTHECA INDICA;

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE SUPERINTENDENCE OF THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 132.




# गृह्यसूत्रम् ।

## आश्वलायनप्रणीतम् ।

गार्ग्यनारायणीयवृत्तिसहितम् ।

श्रीआनन्दचन्द्र-वेदान्तवागीशेन परिशोधितम् ।

---

# THE GRIHYA SU'TRA OF A'SWALA'YANA,

WITH THE

COMMENTARY OF GA'RGYA NA'RA'YAṆA,

EDITED BY

A'NANDACHANDRA VEDÁNTAVÁGÍSA'.

FASCICULUS II.

CALCUTTA:

PRINTED BY C. B. LEWIS, BAPTIST MISSION PRESS.

1868.

## SANSKRIT WORKS PUBLISHED,

IN THE NEW SERIES.

| | Rs. | ans. |
|---|---|---|
| The Vais'eshika Sútras, with commentaries, by Paṇḍita Jayanáráyana Tarkapanchánana. Complete in 5 Fasc. Nos. 4, 5, 6, 8 and 10 ... ... ... ... ... | 3 | 2 |
| The Sáṇḍilya Sútras with S'wapnes'wara's commentary, edited by J. R. Ballantyne, LL. D. Complete in 1 Fasc. No. 11. | 0 | 10 |
| The Kaushítaki-Bráhmana Upanishad with S'aṅkaránanda's commentary, edited, with a translation, by E. B. Cowell, M. A. Complete in 2 Fasciculi, Nos. 19 and 20. ... | 1 | 4 |
| A translation of the Súrya Siddhánta and Siddhánta S'iromani, by Paṇḍita Bápú Deva S'ástrí, under the superintendence of the Ven. Archdeacon Pratt. Complete in 3 Fasc. Nos. 1, 13 and 28. .. .. ... ... .. ... | 1 | 14 |
| The Kávyádars'a of S'rí Daṇḍin, edited, with a commentary, by Paṇḍita Premachandra Tarkavágís'a. Complete in 5 Fasciculi. Nos. 30, 33, 38, 39 and 41. ... .. ... | 3 | 2 |
| The Brihatsaṅhitá of Varáha-Mihira, edited by Dr. H. Kern. Complete in 7 Fasciculi. Nos 51, 54, 59, 63, 68, 72 and 73. | 4 | 6 |
| A translation of the Sáṅkhya Aphorisms of Kapila, by J. R. Ballantyne, LL. D. Complete in 2 Fasc. Nos. 32 and 81. | | |
| The Das'a Rúpa, with the exposition of Dhanika, edited by F. E. Hall, D. C. L. Complete in 3 Fasc. Nos. 12, 24, and 82. ... .. ... ... ... ... | 1 | 14 |
| Sáṅkhya Sára, a treatise on Sánkhya Philosophy, edited by F. E. Hall, D. C. L. Oxon. No. 83. ... ... ... | 0 | 10 |
| The Nárada Pancharátra, edited by Rev. K. M. Banerjea, Complete in 4 Fasc. Nos. 17, 25, 34 and 75. ... ... | 2 | 8 |
| Nyáya Dars'ana of Gotama, with the commentary of Vátsyáyana, edited by Paṇḍita Jayanáráyana Tarkapanchánana. Complete in 3 Fasc. Nos. 56, 67 and 70. ... ... | 1 | 14 |
| The S'rauta Sutra of As'waláyana, with the commentary of Gárgya Náráyana. Edited by Paṇḍita Rámanáráyana Vidyaratna. Complete in 10 Fasc. ... ... ... | 6 | 4 |

---

## SANSKRIT WORKS IN PROGRESS.

The Maitri Upanishad, with the commentary of Rámatírtha, edited, with an English Translation, by E. B. Cowell, M. A. Fasc. I. and II. Nos. 35 and 40.

The Mímáṅsá Dars'ana, with the commentary of Sabara Swámin, edited by Paṇḍita Mahes'achandra Nyáyaratna, Fasc. I. to V. Nos. 44, 85, 95, 101, 115.

The Taittiríya Áraṇyaka of the Black Yajur Veda, with the commentary of Sáyanácharya, edited by Bábu Rájendralála Mitra. Fasc. I. II. III. and IV. Nos. 60. 71. 88 and 97.

The Sañkara Vijaya of Anantánanda Giri, edited by Paṇḍita Navadwípachandra Goswámí. Fasc. I. No. 16.

**ऋत्विजो वृणीतेऽन्यूनानतिरिक्ताङ्गान् ये मातृतः पितृतश्चेति यथोक्तं पुरस्तात् ॥ १ ॥**

प्रमाणतः परिमाणतश्चान्यूनाङ्गाननतिरिक्ताङ्गांश्च ऋत्विजः सम्भजन्ते। *ये मातृतः पितृतश्चेत्युक्तलक्षणयुक्ताश्च ते भवेयुः। तत्र प्रमाणतो नातिदीर्घा नातिह्रस्वाः। परिमाणतश्चतुरङ्गुलयः षडङ्गुलयो वा न भवन्ति ॥ १ ॥

**यून ऋत्विजो वृणीत इत्येके ॥ २ ॥**

अन्ये कर्मसमर्थानित्याहुः। पुनर्ऋत्विग्ग्रहणं वरणसामान्यादनृत्विजामपि चमसाध्वर्युप्रभृतीनामेतद्गुणप्राप्तौ तन्निवृत्त्यर्थं ॥ २ ॥

**ब्रह्माणमेव प्रथमं वृणीतेऽथ होतारमथाध्वर्युमथोद्गातारम् ॥ ३ ॥**

एवकारो नियमार्थः। कथं ब्रह्मण एव प्रथमं वरणं स्यादिति. एवं नियमङ्कुर्वता होत्रादीनामनियतः क्रमो भवतीत्येतत साधितं ॥ ३ ॥

**सर्वान् वा येऽहीनैकाहैर्याजयन्ति ॥ ४ ॥**

अहीनैकाहैर्याजयन्तीतिवचनं ग्रमितनिवृत्त्यर्थं। कथं वा प्राप्नुयात्. सामान्यवरणप्रसङ्गात्। ‘आपो मे होत्राशंमिन इति

---

* ये मातृतः पितृतश्च दशपुरुषं विद्यातपोभ्यां पुण्यैश्च कर्म्मभिर्येषामुभयतो नाब्राह्मण्यमिति सं॰ पु॰ अधिकः पाठः।

होत्रकान्'[ऋ० १।२ ३।८] इत्यत्र होत्रकशब्दो मुख्यवर्जितेषु वर्त्तते. 'होत्रका उपह्वयध्वमितीतरान्' इत्यत्र मुख्यवर्जितेषु होत्रकशब्दस्य दर्शनात्। ततश्च यथा प्रतिप्रस्थात्रादिषु वर्त्तते एवं शमित्रादिष्वपि वर्त्तते होत्रकशब्द इति॥ ४ ॥

सदस्यं सप्तदशं कौषीतकिनः समामनन्ति. स कर्मणामुपद्रष्टा भवतीति. तदुक्तमृग्भ्यां यमृत्विजो बहुधा कल्पयन्त इति॥ ५ ॥

सदसि भवः सदस्यः। सप्तदशग्रहणमृत्विक्समधर्मा भवतीति ज्ञापनार्थं। तेनोपस्थानप्रसर्पणादिसामान्यविहितं सिद्धं। अथवा नियमार्थं। कथमेक एव सदस्यः स्यादिति। शास्त्रान्तरेऽनेके सदस्या दृष्टाः तन्निवृत्त्यर्थं। स च कर्मणामुपद्रष्टा भवतीत्येवं कौषीतकिन आचार्या मन्यन्ते। ऋग्भ्याञ्चायमर्थ उक्तः॥ ५ ॥

होतारमेव प्रथमं वृणीते॥ ६ ॥

एवकारोऽवधारणार्थः। होतारमेव न ब्रह्माणमिति। एवं चेत् पूर्वेण विरोधः। न. यदा चतुर्णां वरणन्तदा ब्रह्मणः प्रथमं वरणं. यदा सर्वेषान्तदा होतुः प्रथमं वरणमिति॥ ६ ॥

अग्निर्मे होता स मे होता होतारं त्वाऽमुं वृण इति होतारं॥ ७॥

अनेन होतारं वृणीते। अमुमित्यस्य स्थाने होतुर्नाम वाच्यं

पुनर्होतृग्रहणं होतृवरणे आम्नातो मन्त्र उत्तरत्रानुवर्त्तते इति ज्ञापनार्थं॥ ७॥

चन्द्रमा मे ब्रह्मा स मे ब्रह्मा ब्रह्माणं त्वाऽमुं वृण इति ब्रह्माणं॥ ८॥

कृत्स्नपाठोऽनुवृत्तिमार्गप्रदर्शनार्थः॥ ८॥

आदित्यो मेऽध्वर्युरित्यध्वर्युं। पर्जन्यो म उद्गातेत्युद्गातारं। आपो मे होत्राशंसिन इति होत्रकान्। रश्मयो मे चमसाध्वर्यव इति चमसाध्वर्यून्। आकाशो मे सदस्य इति सदस्यं। स वृतो जपेत्. महन्मेऽवोचो भर्गो मेऽवोचो भगो मेऽवोचो यशो मेऽवोचः स्तोमं मेऽवोचः क्लृप्तिं मेऽवोचस्तृप्तिं मेऽवोचो भुक्तिं मेऽवोचः सर्वं मेऽवोच इति॥ ९॥

सग्रहणं कथं. वरणानन्तरमेव जपः स्यात् सर्वेषां वरणे कृते माभूदिति। वृतग्रहणं ये ये वृतास्ते ते जपेयुरित्येवमर्थं॥ ९॥

जपित्वाऽग्निष्टे होता स ते होता होतारन्ते मानुष इति होता प्रतिजानीते॥ १०॥

जपित्वेति वचनं 'तन्मामवतु तन्मा विशतु' इत्येतमपि जपञ्जपित्वेत्येवमर्थं। इहैव तर्हि कस्मान्न पठितः. अनित्यत्वात्। अनित्यत्वन्तु वक्ष्यामः॥ १०॥

चन्द्रमास्ते ब्रह्मा स ते ब्रह्मा ॥ ११ ॥

ते-शब्दपाठः प्रतिवचनस्यानुवृत्तिमार्गप्रदर्शनार्थः ॥ ११ ॥

एवमितरे यथादेशं. तन्मामवतु तन्मा विशतु तेन भुक्षिपीयेति च याजयिष्यन् ॥ १२ ॥

जपतीति शेषः। यदा अग्न्याधेये चतुर्णां वरणं भवति तदा याजयितारस्ते न भवन्ति। यत्तु सोमाङ्गं वरणं भवति तत्र याजयितारो भवन्ति. तेन सोमाङ्गवरण एवायञ्जपो नाग्न्याधेये। तेनायमनित्यः ॥ १२ ॥

याज्यलक्षणमाह।

न्यस्तमार्त्विज्यमकार्यम् ॥ १३ ॥

ऋत्विग्भिर्विवादेन त्यक्तमार्त्विज्यमकार्यं ॥ १३ ॥

अहीनस्य नीचदक्षिणस्य ॥ १४ ॥

अल्पदक्षिणस्याहीनस्यार्त्विज्यमकार्यं। ततो ज्ञायते एकाहस्याल्पदक्षिणस्यापि कार्यमिति। विज्ञायते च तस्मादाहुर्दातव्यैव यज्ञे दक्षिणा भवत्यप्यल्पिकापीति ॥ १४ ॥

व्याधितस्यातुरस्य ॥ १५ ॥

व्याधितो ज्वरादिग्टहीतः। आतुरस्तन्द्रगतः ॥ १५ ॥

## यक्ष्मगृहीतस्य ॥ १६ ॥

यक्ष्मगृहीतः क्षयव्याधिगृहीतः ॥ १६ ॥

## अनुदेश्यभिशस्तस्य ॥ १७ ॥

सदेशिनाऽभिशस्तस्यैवमेके। अन्ये तु श्राद्धे प्रतिषिद्धस्येत्याहुः।
॥ १७ ॥

## क्षिप्रयोनेरिति चैतेषां ॥ १८ ॥

क्षिप्रयोनिर्नाम यस्य माता स्वभर्त्तरि नावतिष्ठते। अकार्यमिति सर्वत्र सम्बन्धनीयं। इति चैतेषामिति वचनमन्येषामप्येवम्प्रकाराणां न कार्यमित्येवमर्थं॥ १८ ॥

## सोमप्रवाकं परिपृच्छेत् को यज्ञः क ऋत्विजः का दक्षिणेति ॥ १९ ॥

यः सोमं प्रथमं निवेदयति इदं त्वया अस्मिन् कार्यमिति स सोमप्रवाकस्तमेवं पृच्छेत्॥ १९ ॥

## कल्याणैः सह सम्प्रयोगः ॥ २० ॥

कल्याणे यज्ञे कार्यं। कल्याणैर्ऋत्विग्भिः सह कार्यं। दक्षिणा अपि कल्याणो यदि स्युः तथा सति कार्यं नान्यथा॥ २० ॥

**न मांसमश्नीयुर्न स्त्रियमुपेयुराक्रतोरपवर्गात् ॥ २१ ॥**

क्रत्वादिप्रभृत्या अपवर्गात् एते नियमा भवन्ति । वरणप्रभृतीति कल्प्यमाने यदि मध्यमोपसदि वरणं भवति तदा प्रागनियमः प्रसज्येत. तस्मात् क्रत्वादिप्रभृतीति युक्तं । मध्यमोपसदि च शास्त्रान्तरे वरणं दृष्टं ॥ २१ ॥

**एतेनाग्ने ब्रह्मणा वावृधस्वेति दक्षिणाग्नावाज्याहुतिं हुत्वा यथार्थं प्रव्रजेत् ॥ २२ ॥**

क्रत्वन्ते स्वस्य दक्षिणाग्नौ एतेनाग्न इत्येतया आज्याहुतिं जुहोति. नैमित्तिकत्वात्. शास्त्रान्तरदर्शनाच्च. मन्त्रलिङ्गाच्च । चकृमेति हि भूतप्रत्ययः । तेन *क्रत्वन्त इति सिद्धं । यथार्थं प्रव्रजेदिति यथार्थमाचरेत्. अनियमो भवतीत्यर्थः । हुत्वाऽनियमो भवतीति ब्रुवन् समाप्तेऽपि क्रतौ होमपर्यन्तं नियमा भवन्तीति ज्ञापयति । आज्याहुतिवचनं तन्त्रनिवृत्त्यर्थमिष्यते. न परिस्तरणविकल्पार्थं ॥ २२ ॥

**एवमनाहिताग्निर्गृह्य इमामग्ने शरणिं मीमृषो न इत्येतयर्चा ॥ २३ ॥ ॥ २३ ॥**

एतयेतिवचनमेतया जुहुयादेवेत्येवमर्थं । तेनात्रापि तन्त्रं न भवति । ऋचेतिवचनमकृतविवाहोऽप्यार्त्विज्यं कृतवानेतया लौकिकाग्नौ जुहुयादित्येवमर्थं । मधुपर्कप्रसङ्गादत्र ऋत्विग्वरणमाम्नातं ॥ २३ ॥

इति प्रथमे त्रयोविंशतितमा कण्डिका ॥ ० ॥

* क्रत्वन्तर इति सं० पु० पाठः

ऋत्विजो वृत्वा मधुपर्कमाहरेत् ॥ १ ॥

दद्यादित्यर्थः ॥ १ ॥

स्नातकायोपस्थिताय ॥ २ ॥

उपस्थिताय कृतसमावर्त्तनाय तस्मिन्नहनि गृहानभ्यागताय विवाहार्थिने च ॥ २ ॥

राज्ञे च ॥ ३ ॥

उपस्थिताय ॥ ३ ॥

आचार्यश्वशुरपितृव्यमातुलानाञ्च ॥ ४ ॥

आचार्यादीनां पूर्वयोरसमासेन निर्देशस्तत्तुल्यत्वज्ञापनार्थः । तेन स्नातकाय तदहरेव देयः । यत्रैनं पूजयिष्यन्तो भवन्तीति वचनात्. विवाहार्थिने च । राज्ञे त्वहरहरभ्यागताय । आचार्यादीनां प्रति वत्सरोषितागतानां शास्त्रान्तरदर्शनाद्विशेषो लभ्यः ॥ ४ ॥

अप्रसिद्धत्वान्मधुपर्कस्वरूपमाह ।

दधनि मध्वानीय ॥ ५ ॥

आनयतिरत्र सेचनकर्मा. आसिच्येत्यर्थः ॥ ५ ॥

सर्पिर्वा मध्वलाभे ॥ ६ ॥

इदं वचनं मध्वलाभे अयमेव प्रतिनिधिर्भवति नान्यस्तैलादिरित्येवमर्थं ॥ ६ ॥

अन्यत्वाद्दातुः कर्म पूर्वमाह ।

**विष्टरः पाद्यमर्घ्यमाचमनीयं मधुपर्को गौरित्येतेषां त्रिस्त्रिरेकैकं वेदयन्ते ॥ ७ ॥**

विष्टर इत्यासनं। पाद्यार्थमर्घ्यार्थमाचमनार्थञ्चोदकं तथोक्तं। एतेषामिति वचनं एतेषामेव त्रिर्निवेदनं यथा स्यात् भोजनस्य माभूदिति। भोजनञ्च देयमिति वक्ष्यामः। ऋत्विजां मधुपर्कदाने द्वे गती सम्भवतः. पदार्थानुसमयः काण्डानुसमय इति। तत्र पदार्थानुसमयो नाम सर्वेषां वरणक्रमेण विष्टरन्दत्वा ततः पाद्यन्ततोऽर्घ्यमिति। काण्डानुसमयो नाम एकस्यैव विष्टरादिगोनिवेदनान्तं समाप्य ततोऽन्यस्य *सर्वन्ततोऽन्यस्येति॥ ७ ॥

अथ ग्रहीतुः कर्माह।

**अहं वर्ष्म सजातानां विद्युतामिव सूर्यः। इदन्तमधितिष्ठामि यो मा कश्चाभिदासतीत्युदगग्रे विष्टर उपविशेत्. आक्रम्य वा ॥ ८ ॥**

†पद्भ्यामाक्रम्य वा विष्टरौ। एतयोर्विकल्पः॥ ८ ॥

**पादौ प्रक्षालापयीत दक्षिणमग्रे ब्राह्मणाय प्रयच्छेत् ॥ ९ ॥**

पश्चात्सव्यं कुत. अग्रेवचनात्॥ ९ ॥

---

* सर्वमिति अधिकपाठः सं० पु० वर्त्तते आदर्शे तु नास्ति।

† पद्भ्या विष्टरमाक्रम्य वेति सं० पु०।

**सव्यं शूद्राय ॥ १० ॥**

अग्रे प्रयच्छेत्। पश्चाद्दक्षिणं। क्षत्रियवैश्यौ यदा प्रक्षालयितारौ तदा सव्यं वा पूर्वं दक्षिणं वा नास्ति नियमः॥ १० ॥

**प्रक्षालितपादोऽर्घ्यमञ्जलिना प्रतिगृह्य ॥ ११ ॥**

प्रक्षालितपादग्रहणमानन्तर्यार्थं। प्रक्षालनानन्तरमर्घ्यमेव गृह्णीयादिति। गन्धमाल्यादिसंयुक्तमुदकमर्घ्यमित्युच्यते॥ ११ ॥

**अथाचमनीयेनाचामति. अमृतोपस्तरणमसीति ॥ १२ ॥**

अथ-शब्दस्त्वानन्तर्यार्थः। अर्घ्यानन्तरमाचमनीयमेवेति। तेन गन्धमाल्यादीनि परिसमाप्ते कर्मणि दातव्यानि। आचामतीत्युदकं पिबतीत्यर्थः। अत्र शौचार्थमाचमनं न भवति। कुतः। स्मृतेः. 'मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च। नोच्छिष्टा भवन्ति' इति। उत्तरत्र विधानाच्च. 'आचान्तोदकाय गां' [गृ० १.२४.२३] इति। एवमेके. तदयुक्तं। कुतः। सोमे अनुच्छिष्टविधानाद्यत्राचमनं न प्रतिषेधति तत्र शौचार्थमाचमनं भवतीति गम्यते। आचान्तोदकवचनमन्यार्थं॥ १२ ॥

**मधुपर्कमाह्रियमाणमीक्षेत. मित्रस्य त्वा चक्षुषा प्रतीक्ष इति ॥ १३ ॥**

मधुपर्कमाह्रियमाणमानीयमानमीक्षेत मन्त्रेण॥ १३ ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामीति तदञ्जलिना प्रतिगृह्य. मधु-वाता ऋतायत इति तृचेनावेक्ष्यानामिकया चाङ्गुष्ठेन च त्रिः प्रदक्षिणमालोड्य. वसवस्त्वा गायत्रेण छन्दसा भक्षयन्त्विति पुरस्तान्निमार्ष्टि ॥ १४ ॥

अनामिकेति केचिन्मध्यमामाहुः। कुतः। देशेनैव समाख्या न तु तस्या नाम विद्यते अङ्गुष्ठादिवत्। अन्ये तूपकनिष्ठिकामाहुः। कुतः। कनिष्ठिकया ह्यसौ व्यपदिश्यते न तु तस्या नामास्तीति। आगमाद्विशेषो ज्ञेयः। तृचेनावेक्ष्य ततः सव्ये पाणौ कृत्वा प्रद-क्षिणमालोड्य वसवस्त्वेति पुरस्तान्निमार्ष्टि. अङ्गुलिगतं लेपमप-नयतीत्यर्थः ॥ १४ ॥

रुद्रास्त्वा त्रैष्टुभेन छन्दसा भक्षयन्त्विति दक्षिणतः. आदित्यास्त्वा जागतेन छन्दसा भक्षयन्त्विति पश्चात्. विश्वे त्वा देवा आनुष्टुभेन छन्दसा भक्षयन्त्वित्युत्तरतः भूतेभ्यस्त्वेति मध्यात् त्रिरुद्गृह्य ॥ १५ ॥

मन्त्रेण मध्यात् त्रिरुद्गृह्य निमार्ष्टि. ऊर्ध्वं त्रिरुत्क्षिपतीत्यर्थं मन्त्रावृत्तिरुक्ता ॥ १५ ॥

ततो भूमौ निधाय पात्रम्।

विराजो दोहोऽसीति प्रथमं प्राश्नीयात्. विरा

दोहमशीयेति द्वितीयं, मयि दोहः पद्यायै विराज इति तृतीयं ॥ १६ ॥

सङ्ख्यावचनानि तु सर्वप्राशनपक्षे त्रिभिरेव मन्त्रैर्यथा सर्वं प्राशितं भवति तथा प्राश्नीयादित्येवमर्थानि । एवं भाष्यकारः । अन्ये त्वन्यथा व्याचख्युः । भूतेभ्यस्त्वेति मध्यात्त्रिरुद्धृत्य विराजो दोहोऽसीति प्रथममुद्ग्राहं प्राश्नीयात् । विराजो दोहमशीयेति द्वितीयमुद्ग्राहं । मयि दोह इति तृतीयमुद्ग्राहं । तृतीयवचनं सर्वप्राशनपक्षे तृतीयेन प्राशनेन यथा सर्वं प्राशितं भवति तथा प्राश्नीयादित्येवमर्थं । पद्यायै विराज इत्यत्र विराज इति षष्ठी । कुतः । पूर्वयोस्तथा दृष्टत्वात् । पद्यायै इत्यपि चतुर्थी षष्ठ्यर्थे । तेन तत्समानाधिकरणे सत्यपि षष्ठ्येव युक्ता कल्पयितुं ॥ १६ ॥

न सर्वं ॥ १७ ॥

प्राश्नीयात् न सर्वं ॥ १७ ॥

न तृप्तिं गच्छेत् ॥ १८ ॥

तृप्तिञ्च न गच्छेत् ॥ १८ ॥

ब्राह्मणायोदङ्ङुच्छिष्टं प्रयच्छेत्, अलाभेऽप्सु ॥ १९ ॥

ब्राह्मणाय उच्छिष्टं उद्धृतादवशिष्टं उदङ्मुखो मधुपर्कं प्रयच्छेत् । ब्राह्मणालाभे अप्सु निषिञ्चेत् ॥ १९ ॥

सर्वं वा ॥ २० ॥

प्राश्नीयात् ॥ २० ॥

अथाचमनीयेनान्वाचामति. अमृतापिधानमसीति ॥ ॥ २१ ॥

यत्तत्पूर्वमाचमनीयं निवेदितं तेनान्वाचामति मन्त्रेण ॥ २१ ॥

सत्यं यशः श्रीर्मयि श्रीः श्रयतामिति द्वितीयं ॥ २२ ॥

द्वितीयग्रहणमाचमनीयप्राप्त्यर्थं. इतरया मन्त्रस्योत्तरेण सम्बन्धः स्यात् ॥ २२ ॥

आचान्तोदकाय गां वेदयन्ते ॥ २३ ॥

आचान्तग्रहणं शौचार्थमाचमनं कृत्वा कर्माङ्गमप्याचमनं कुर्यादित्येवमर्थं। उदकवचनमाचमनीयनिवृत्त्यर्थं। तेनाचमने उदकान्तरं भवति ॥ २३ ॥

हतो मे पाप्मा पाप्मा मे हत इति जपित्वोङ्कुरुतेति कारयिष्यन् ॥ २४ ॥

इमं मन्त्रं जपित्वा ॐ कुरुतेति ब्रूयात् यदि कारयिष्यन्मारयिष्यन् भवति. तदा च दाता आलभेत। तत्र देवताः प्रागुक्ताः ॥ २४ ॥

**माता रुद्राणां दुहिता वसूनामिति जपित्वोमुत्सृजतेत्युत्सक्ष्यन्॥ २५॥**

यद्युत्सक्ष्यन् भवति तदा एतां जपित्वा ॐमुत्सृजतेति ब्रूयात्॥ २५॥

**नामांसो मधुपर्को भवति भवति॥ २६॥　॥ २४॥**

मधुपर्काङ्गं भोजनं अमांसं न भवतीत्यर्थः। कुतः। मांसस्य भोजनाङ्गत्वेन लोके प्रसिद्धत्वात्। अनेनाभ्युपायेन भोजनमप्यत्र विहितं भवति। पशुकरणपक्षे तन्मांसेन भोजनम्। उत्सर्जनपक्षे मांसान्तरेण। अध्यायान्तलक्षणार्थं द्विवचनं, मङ्गलार्थञ्च॥ २६॥

इति प्रथमे चतुर्विंशतितमा कण्डिका॥०॥

इत्याश्वलायनगृह्यसूत्रविवरणे नारायणीयायां वृत्तौ प्रथमोऽध्यायः।

अस्मिन्नध्याये स्थालीपाकादीन्युपाकर्मान्तानि कर्माण्युक्तानि॥०॥

॥ ॐ ॥

श्रावण्यां पौर्णमास्यां श्रवणाकर्म ॥ १ ॥

कर्त्तव्यमिति शेषः। सर्पबलिश्चेत्यध्याहार्यं। *श्रवणे युक्ता श्रावणी। यदा पुनः पौर्णमासी श्रवणे न युक्ता तदापि कर्त्तव्यमेव। पौर्णमासीविशेषलक्षणार्थत्वान्नक्षत्रस्य। श्रवणाकर्मेति कर्मनामधेयम्॥ १ ॥

अक्षतसक्तूनां नवङ्कलशं पूरयित्वा दर्वीञ्च बलिहरणीं नवे शिक्ये निदधाति ॥ २॥

अक्षता नाम यवाः तैः कृताः सक्तवः। दर्वी वैकङ्कती स्रुगाकृतिः। बलिर्यया दर्व्या ह्रियते सा बलिहरणी। एतदुभयं नवे शिक्ये निदधाति सर्पबल्यर्थं॥ २ ॥

अथ श्रवणाकर्मोच्यते।

अक्षतधानाः कृत्वा सर्पिषाऽर्द्धा अनक्ति ॥ ३॥

यवैर्धानाः कृत्वा असंस्कृतेन घृतेनानक्ति अर्द्धा धानाः पात्रान्तरे कृत्वा. अन्यास्त्वर्द्धा धाना नानक्ति। एतावदङ्कि कर्त्तव्यं॥ ३

अस्तमिते स्थालीपाकं श्रपयित्वैककपालञ्च पुरोडाशं. अग्ने नय सुपथा राये अस्मानिति चतसृभिः प्रत्यृचं हुत्वा पाणिनैककपालं. अच्युताय भौमाय स्वाहेति ॥ ४ ॥

* श्रवणेन युक्ता श्रावणी। यदा पुनः पौर्णमासी श्रवणेन यु[illegible] [illegible]र्णमासो[illegible]वश्यम्भाव्येकनक्षत्रे[illegible]नतयाऽधःकृतः।

अपयित्वेतिवचनं पुरोडाशस्योपासने धर्मवत्क्ल्पणार्थं। स्थालीपाकस्य तु तन्त्रप्राप्त्यैवोपासने अपणं सिध्यति। नन्वन्यस्यापि सिध्यति। नियमार्थं तर्हि। तेन धानासक्तुलाजादीनां लौकिकाग्नौ सिद्धानामेवोपादानं भवति। एतावांस्तु तेषां संस्कारः। आज्यपर्यग्निकरणवेलायां तैः सहाज्यस्य पर्यग्निकरणं भवेत्। यदा आज्यस्य उत्पवनमात्रमेव क्रियते तदा तेषां त्रिः प्रोक्षणं भवेत्। अवज्वलनं *वा दधिवत्। एकस्मिन् कपाले संस्कृतः पुरोडाश एककपालः पुरोडाशः। तमुद्वास्याज्ये निमग्नं कुर्यात् †व्यक्तपृष्ठं वा कुर्यात्। चरुं चतसृभिः प्रत्यृचं हुत्वा दक्षिणेन पाणिना एककपालं जुहुयात् मन्त्रेण। उपस्तरणाभिघारणे तु सव्येन करोति। दक्षिणस्याऽन्यत्र व्यापृतत्वात्। दक्षिणाङ्गपरिभाषा च द्वयोः प्राप्तयोर्नियामिका न तु प्रापिकेत्युक्तं। अस्य सर्वहुतत्वात् ‡अवदानधर्मा लुप्तः। सर्वहुतत्वं तु वक्ष्यामः॥ ४॥

## अविप्लुतः स्यादाविःपृष्ठो वा॥ ५॥

व्याख्यातमेतत्॥ ५॥

## मा नो अग्नेऽवसृजो अघायेत्येनमाशयेनाभिजुहोति॥ ६॥

एनं पुरोडाशं। एनमिति वचनमखण्डितोऽयं हुत इति ज्ञा-

* वा दधिवदित्यस्य स्थाने पूर्ववदिति सं॰ पु॰ पाठः।
† व्यक्तपृष्ठमित्यस्य स्थाने प्रकटपृष्ठमिति सं॰ पु॰ पाठः।
‡ अवदानमर्थलुप्तमिति सं॰ पु॰ पाठः।

पनार्थं। यस्मिन्नाज्ये पुरोडाशः शायितस्तदाश्रयं तेनाभिजुहोर्ति
उपरिजुहोतीत्यर्थः. स्रुवेण ॥ ६ ॥

**शन्नो भवन्तु वाजिनो हवेष्वित्यक्ता धाना अञ्
लिना ॥ ७ ॥**

जुहुयादिति शेषः। हस्तद्वयमङ्क्तोऽञ्जलिः। उपस्तरणावदा
प्रत्यभिघारणान्यर्थादन्यः करोति ॥ ७ ॥

**अमात्येभ्य इतरा दद्यात् ॥ ८ ॥**

इतरा अनक्ता धानाः पुत्रादिभ्यो दद्यात्। ततो *धाना
गृहीत्वा स्विष्टकृतं हुत्वा होमशेषं समापयेत्। अथ सर्पबलि
च्यते ॥ ८ ॥

**कलशात्सक्तूनान्दर्वीं पूरयित्वा प्रागुपनिष्क्
शुचौ देशेऽपोऽवनिनीय. सर्पदेवजनेभ्यः स्वाहेति हु
नमस्करोति. ये सर्पाः पार्थिवा ये आन्तरिक्ष्या ये दि
ये दिश्यास्तेभ्य इमं बलिमाहार्षन्तेभ्य इमं बलिमु
करोमीति ॥ ९ ॥**

कलशश्च दर्वी च नवे शिक्ये स्थापिते। तत्र कलशात् गृहं
सक्तुभिर्दर्वीं पूरयित्वा तां गृहीत्वा गृहान्निष्क्रम्य †गृहाग्नि

* धानाभ्यस्त्वरोस्वेति सं० पु० पाठः।
† गृहान्तिके. अपि वेति सं० पु० नास्ति।

अपि वाऽसमीपे देशे प्राच्यां दिशि शुचौ देशे अप आसिच्य मन्त्रेण सक्तून् जुहोति प्रक्षिपति। ततो नमस्करोति संहताभ्यां पाणिभ्यां मन्त्रेण। हुत्वेति-वचनादग्नौ प्राप्ते तन्निवृत्त्यर्थं शुचौ देश इति वचनम्॥ ९॥

प्रदक्षिणं परीत्य पश्चाद्बलेरुपविश्य. सर्पोऽसि सर्पतां सर्पाणामधिपतिरस्यन्नेन मनुष्यांस्त्रायसेऽपूपेन सर्पान् यज्ञेन देवांस्त्वयि मा सन्तं त्वयि सन्तः सर्पा माहिंसिषुर्ध्रुवान्ते परिददामीति॥ १०॥

ब्रूयादिति शेषः। प्रदक्षिणं परीत्य बलिं। पश्चादस्योपविश्याह मन्त्रं। बलिग्रहणं पश्चाच्छब्दस्य कालवाचित्वशङ्कानिवृत्त्यर्थं। कालवाचित्वे सति सर्वाहुत्यन्तरमेव स्यात्। मन्त्रसञ्ज्ञकोऽयं मन्त्रः। तथा चोक्तं।

'इदं कार्यमनेनेति न क्वचित् दृश्यते विधिः।
लिङ्गादेवेदमर्थत्वं येषान्ते मन्त्रसञ्ज्ञकाः'॥ इति॥

तस्मादुपांशुर्भवति। यथाहुः। 'गृह्यकर्मणि सर्वत्र जपानुमन्त्रणाभिमन्त्रणोपस्थानमन्त्रकरणमन्त्रा उपांशु प्रयोक्तव्याः' इति॥ १०॥

ध्रुवामुन्ते ध्रुवामुन्त इत्यमात्याननुपूर्वं॥ ११॥

परिदद्यादिति शेषः। उत्तरत्र दृष्टः परिददामिशब्दोऽत्रापि

सम्बध्यते. साकांक्षत्वादस्य मन्त्रस्य। वीप्सावचनं प्रत्यमात्यं परिदानस्य अभ्यासः कार्यो न सर्वेषां नामानि निर्दिश्य सकृदवक्तव्यमित्येवमर्थं। पूर्वं पुत्रान्निवेदयति. ध्रुवदेवदत्तं ते परिददामीति ततोऽप्रत्ता दुहितॄः. ध्रुवमावित्रीं ते परिददामीति। ततो भार्यां ध्रुवमत्यवतीं ते परिददामीति॥ ११॥

## ध्रुवमान्ते परिददामीत्यात्मानमन्ततः॥ १२॥

परिदद्यादिति शेषः। उपदेशादेवान्तत इति सिद्धे अन्ततो वचनं पूर्वेण सम्बन्धार्थं। तेन पूर्वत्र परिददामीतिशब्दः सिद्धः॥ १२॥

## नैनमन्तरा व्येयुरापरिदानात्॥ १३॥

एनं बलिमात्मानं चान्तरा न व्येयुः। केचिदपि परिदानपर्यन्त आपरिदानादितिवचनात्। पूर्वमन्त्रसाध्यक्रिया परिदानमिति गम्यते॥ १३॥

## सर्पदेवजनेभ्यः स्वाहेति सायं प्रातर्बलिं हरेदाप्रत्यवरोहणात्॥ १४॥

कलशात् सक्तूनां दर्वीं पूरयित्वा शुचौ देशे मन्त्रेण बलिं हरेदाप्रत्यवरोहणात् सायं प्रातश्च। आचतुर्दश्या आपौर्णमास्या यस्मिन्नहनि प्रत्यवरोहणङ्करोति। मन्त्रोपदेशो नियमार्थः। स

एव भवति नान्यो विधिरिति। मन्त्रवन्तावन्न निवर्तन्ते. कलशपूरण-स्यादृष्टार्थत्वप्रसङ्गात्। दर्वी च न निवर्तते। 'दर्वीञ्च बलिहरणी-मित्यत्र बलिहरणीम्' [गृ० २.१.२] इति विशेषणस्येदमर्थत्वात्। शुचिदेशस्य न निवर्तते. बलिहरणस्य भूमिमाध्यत्वेन प्रसिद्धत्वात्। अन्यत्सर्वं निवर्तते ॥ १४ ॥

**प्रसङ्ख्याय हैके तावतो बलींस्तद्हरेवोपहरन्ति॥ १५॥ ॥ १ ॥**

श्रावणीं प्रतिपदमारभ्य यस्मिन्नहनि प्रत्यवरोहणं करोति मार्गशीर्षचतुर्दश्यां पौर्णमास्यां वा तस्मादर्वाचीनान्यहानि ह्रास-वृद्धिभ्यां परिगणनया तेष्वहःसु यावन्तः प्रातःसायङ्कालास्तावतो बलींस्तदहरेव दद्यात्. इत्येके मन्यन्ते। ह-शब्दोऽभिमतत्वज्ञाप-नार्थः सर्वत्र॥ १५ ॥

इति द्वितीये प्रथमा कण्डिका॥०॥

**आश्वयुज्यामाश्वयुजीकर्म॥ १ ॥**

अश्वयुग्भ्यां युक्ता आश्वयुजी. तस्यां पौर्णमास्यामिति वर्त्तते। आश्वयुजीकर्मसंज्ञकं कर्म कुर्यात्। अयोगेऽपि पूर्ववत्॥ १ ॥

**निवेशनमलंकृत्य स्नाताः शुचिवाससः पशुपतये**

**स्थालीपाकं निरुप्य जुहुयुः. पशुपतये शिवाय शङ्कराय पृषातकाय स्वाहेति ॥ २ ॥**

निवेशनं गृहं. तत् प्रत्यवरोहणोक्तविधिनालङ्कृत्य सर्वे गृह्याः स्नान्ति। स्नानवचनं विशेषेण स्नानार्थं. शौचार्थस्य सर्वत्र प्राप्तत्वात्। शुचिवासोवचनं शुक्लवस्त्रप्राप्त्यर्थं। स्थालीपाकं जुहुयुरित्येता-वतैव सिद्धे पशुपतये निरुप्येतिवचनं 'पशुपतये त्वा जुष्टं निर्वपामि' इत्येवं निर्वापप्रोक्षणे कुर्यादित्येवमर्थं। एवं ब्रुवता आदिष्टमन्त्रेषु पाकयज्ञेषु निर्वापप्रोक्षणे तूष्णीं भवत इत्येतत् ज्ञापितं भवति। स्थालीपाकमिति द्वितीयानिर्देशेऽपि सर्वहुतत्वाशङ्का न कार्या। 'अथ दधिसक्तून् जुहोति' इत्यत्र हुत्वा दधिसक्तून् प्राश्येति शेष-भावदर्शनात्। स्थालीपाकमिति स्थालीपाकस्यैकदेशमित्यर्थ.। जुहु-युरिति बहुवचनं गृहिणा होमे क्रियमाणे पुत्रादयो गृह्याः समन्वारभेरन्नित्येवमर्थं ॥ २ ॥

**पृषातकमञ्जलिना जुहुयात्. ऊनं मे पूर्यतां पूर्णं मे मोपसदत् पृषातकाय स्वाहेति ॥ ३ ॥**

पयस्याज्ये निषिक्ते तु तत् पयः स्यात् पृषातकं। उपस्तरणा-भिघारणे अर्थादन्यः करोति। पृषातकं स्रुवेणावद्यति। धानाव-दस्य संस्कारः। सर्वत्र द्रवद्रव्याणि स्रुवेणावद्यति। कठिनानि तु हस्तेन। स्वधितिना पशुं। चरोः पृषातकाच्च स्विष्टकृतेऽवद्येत्। होमशेषं समापयेत्। इतीदमाश्वयुजीकर्म ॥ ३ ॥

---

* इत्युक्तेति सं० २ पु० पाठः।

अथाग्रयणमुच्यते

**सजूर्ऋतुभिः सजूर्विधाभिः सजूरिन्द्राग्निभ्यां स्वाहा सजूर्ऋतुभिः सजूर्विधाभिः सजूर्विश्वेभ्यो देवेभ्यः स्वाहा। सजूर्ऋतुभिः सजूर्विधाभिः सजूर्द्यावापृथिवीभ्यां स्वाहेत्याहिताग्नेराग्रयणः स्थालीपाकः ॥ ४ ॥**

अविशेषादाहिताग्नेरपि सिध्यति. श्रवणाकर्मादिवत्. आहिताग्निग्रहणं किमर्थं । अत्र ब्रूमः. आहिताग्नेराग्रयणान्तरस्य विहितत्वादेतदाग्रयणं न प्राप्नोति. तस्मादाहिताग्निग्रहणमयज्ञा*पत्काले द्रष्टव्यः । इदं चास्य त्रेतायां भवति. नौपासने । तत् तु साधयिष्यामः । शास्त्रान्तरे च दृश्यते । 'आग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यः' इति । तस्मात् त्रेतायामिति सिद्धं । इह तु विधानं पाकयज्ञधर्मप्राप्त्यर्थं ॥ ४ ॥

**अनाहिताग्नेरपि शालाग्नौ ॥ ५ ॥ ॥ २ ॥**

अनाहिताग्नेरप्याग्रयणं कार्यं. तच्च शालाग्नौ भवति । शालाग्निर्नामौपासनः । तर्हि शालाग्निग्रहणमपार्थकं । सत्यं. नियमार्थं तु तत्. अनाहिताग्नेरौपासन इति । तेनाहिताग्नेस्त्रेतायामिति सिद्धं । स्विष्टकृतं हुत्वा चरोरेकदेशं गृहीत्वा सव्ये पाणौ कृत्वा दक्षिणेनाभिमृशेत् 'प्रजापतये त्वा' इति मन्त्रेण । ततो 'भद्रान्नः श्रेयः' इति प्राश्य तत आचम्य तत्रैवासीनो नाभिमालभेत. 'अमोऽसि' इति । †पत्नी

* आपत्कान्ये इति सो० २ पु० पाठः ।

† पत्नी तु मध्यम० इति सो० २ पु० पाठः ।

हविःशेषं प्राश्नाति तूष्णीं। होमशेषं समापयेत्। एतत् प्राशनमाग्रयणद्वयेऽपि भवति। सौकर्यार्थमिदमत्र लिखितं। इदं चाग्रयणं यदा वर्षस्य तृप्तः स्यात् तदा भवति। शरदीत्यर्थः। तथा च वचनं 'शरदि व्रीहिभिर्यजेत' इति। तत्र च पर्वणि भवति। यवाग्रयणञ्च *न कार्यं। श्यामाकैस्तु प्रस्तरं कुर्यात् नाग्रयणं, दृष्टत्वात्। अपि वात्र समानतन्त्रं कुर्यात् सौम्यं चरुं। अस्य च नामधेयेन होमः। आग्रयणस्थालीपाक इत्यत्र च विशेषणसमासः आग्रयणं चासौ स्थालीपाकश्चेति। तत्र स्थालीपाकग्रहणस्येदं प्रयोजनं। अनाहिताग्नेः स्थालीपाक एव कार्यः। 'नाग्निहोत्रीं वै नानादयित्वा' इत्ययं पक्षः कार्य इति॥ ५॥

इति द्वितीये द्वितीया कण्डिका॥ ०॥

---

## मार्गशीर्ष्यां प्रत्यवरोहणं चतुर्दश्यां॥ १॥

मृगशीर्षेण युक्ता मार्गशीर्षी. पौर्णमास्यामिति वर्त्तते। सामीप्ये चेयं सप्तमी। यथा 'अथाग्नीषोमीयेण चरन्त्युत्तरवेद्यां' इति। तेनायमर्थः। मार्गशीर्ष्याः पौर्णमास्याः समीपे या चतुर्दशी तस्यां प्रत्यवरोहणं नाम कर्म कर्त्तव्यमिति॥ १॥

## पौर्णमास्यां वा॥ २॥

मार्गशीर्ष्यामिति वर्त्तते। अत्र त्वधिकरणे सप्तमी। तेन मार्गशीर्ष्यां पौर्णमास्यां वेति पूर्वेण सह विकल्पः। भाष्यकारस्त्वित्थं

* नेति आदर्शपु० नास्ति।

विवृतवान्। मार्गशीर्षी पौर्णमासी यस्मिन् मासे सोऽयं मार्गशीर्षो मासः। 'सास्मिन् पौर्णमासीति सञ्ज्ञायाम्' [पा० ४.२.२१] इत्यण्प्रत्ययः। तस्मिन् मासे भवायां चतुर्दश्यां पौर्णमास्यां वेति विकल्प इत्यर्थः। नन्वेवं सति चतुर्दशोदितत्वात् द्विः कर्म प्राप्नोति. न सकृदेव कार्यं 'सकृत् कृते कृतः शास्त्रार्थः' इति न्यायात्. चतुर्दश्यामित्येकवचनाच्च. पौर्णमास्या सह विकल्पाच्च। नन्वेवमपि शुक्ले कृष्णे वा स्यात्। न. पौर्णमासीसाहचर्यात् शुक्ल एवेति॥ २॥

**निवेशनं पुनर्नवीकृत्य लेपनस्तरणोपस्तरणैरस्तमिते पायसस्य जुहुयुरपश्वेतपदा जहि पूर्वेण चापरेण च। सप्त च वारुणीरिमाः सर्वाश्च राजबान्धवीः स्वाहा न वै श्वेतस्याभ्यागारेऽहिर्जघान किञ्चन। श्वेताय वैदार्वाय नमः स्वाहेति॥ ३॥**

पुनरिति वचनादाश्वयुजीकर्मण्यपीत्थमेवालंकरणमिति गम्यते। नवीकृत्य नवमिव कृत्वेत्यर्थः। तच्च एतैरित्याह। लेपनं कुड्यादीनां। स्तरणञ्च तेषामेवाच्छादनं। उपस्तरणं भूमेः समीकरणं। नवीकृत्येति वचनात् *अपामार्गादीन्यपि उद्धास्यानि। एतावदहनि कर्त्तव्यं। अथास्तमिते पायसस्य एकदेशं जुहुयुर्मन्त्राभ्यां। 'तत्कालाश्चैव तद्गुणाः' इति न्यायात्. उपलेपनाद्यस्तमित एव कार्यं। बहुवचनं पूर्ववत्॥ ३॥

* उपामार्गादीनीति सो० २ पु० पाठः।

## नात्र सौविष्टकृत् ॥ ४ ॥

सौविष्टकृदिति स्विष्टकृदित्यर्थः सर्वत्र। अत्र कर्मणि यः स्विष्टकृत्स न कार्य इत्यर्थः। असत्यत्रग्रहणे प्रधानानन्तरं उच्यमानत्वात् प्रधानानन्तरं स्विष्टकृन्न भवतीत्यर्थः स्यात् अन्ते च स्यादेव। ननु प्रधानानन्तरं स्विष्टकृतः प्राप्तिरेव नास्ति। तथाहि। एताभ्यो देवताभ्यो हुत्वा सौविष्टकृतं हुत्वा इत्यत्र सौविष्टकृतं हुत्वेत्येतदपार्थकं। प्रधानानन्तरं स्विष्टकृतः प्रकृतितः प्राप्तत्वात् तत् कुर्वन् ज्ञापयति. अन्यत्र यान्यागन्तून्यङ्गानि विहितानि तत्र तानि कृत्वा पश्चात् स्विष्टकृत् कार्य इति। तर्हि प्रधानानन्तरं स्विष्टकृत्प्रतिषेधाशङ्कानिवृत्त्यर्थमत्र-ग्रहणं कुर्वन् ज्ञापयति. अत्र प्रधानानन्तरमन्ते वा स्विष्टकृन्न भवतीति। तेनान्यत्र प्रधानानन्तरं कर्मणोऽन्ते वा स्विष्टकृदिति विकल्पः सिद्धः। अथवा सौविष्टकृतं हुत्वेत्येतत् क्रमार्थं। असति तु तस्मिन् प्रधानानन्तरमेव प्राशनादि स्यात्। अत्र च प्रधानानन्तरं स्विष्टकृतः प्रकृतिप्राप्तत्वात् तस्य च प्रतिषेधे सति कर्मण्येव प्रतिषेधो भवति. कालान्तरे प्राप्त्यभावात्। एवं च सत्यत्र-ग्रहणं कुर्वन् ज्ञापयति. अन्यत्र कर्मान्ते वा स्विष्टकृद्भवतीति ॥ ४ ॥

## अभयन्नः प्राजापत्येभ्यो भूयादित्यभिमीक्षमाणो जपति. शिवो नः सुमना भवेति हेमन्तं मनसा ध्यायात् ॥ ५ ॥

अर्थध्यानस्य मुख्यत्वेऽपि शब्दध्यानमेव कार्यमित्येवमर्थं मनोग्रहणं। मन्त्रमुक्त्वा मनसा हेमन्तशब्दं सम्बुद्ध्यन्तं ध्यायेत् मन्त्रेण समानाधिकरणत्वाय ॥ ५ ॥

पश्चादग्नेः स्वस्तरः स्वास्तीर्णस्तस्मिन्नुपविश्य. स्योना पृथिवी भवेति जपित्वा संविशेत्सामात्यः प्राक्शिरा उदङ्मुखः॥ ६ ॥

यस्मिन् स्तरणे स्वयं शेते स स्वस्तरः. स स्वास्तीर्णो भवति. स्वयमेव तमास्तृणीयादित्यर्थः। तस्मिन्-ग्रहणममात्यानामपि तत्रैव प्रापणार्थं। संविशेदिति शयीतेत्यर्थः। अमात्याः पुत्रादयो गृह्याः। उदङ्मुखवचनं दक्षिणामुखनिवृत्त्यर्थं॥ ६ ॥

यथावकाशमितरे॥ ७॥

अमात्या यथावकाशं प्राक्शिरस उदङ्मुखाः संविशेयुरित्यर्थः। उत्तरविवक्षार्थमिदं॥ ७॥

ज्यायान् ज्यायान्वानन्तरः॥ ८॥

यो यो यस्माद्यस्माद्वृद्धतरः स स दक्षिणोऽनन्तरं संविशेत्। यथावकाशं वेति विकल्पः॥ ८॥

मन्त्रविदो मन्त्रान् जपेयुः॥ ९॥

स्योना पृथिवीत्यारभ्य स्वस्त्ययनपर्यन्तान् मन्त्रान् मन्त्रविदः सर्वे ब्रूयुर्गृह्याः॥ ९॥

संहाय. अतो देवा अवन्तु न इति त्रिः॥ १०॥

संहायेत्युत्थायेत्यर्थः। प्राङ्मुखास्त्रिर्ब्रूयुः॥ १०॥

**एतां दक्षिणामुखाः प्रत्यङ्मुखा उदङ्मुखाश्चतुर्थं॥११॥**

एतामितिवचनं योगविभागार्थं। इतरथा त्रिदिङ्मुखास्त्रिर्ब्रूयुः. चतुर्थं चतुर्वारं त्रिदिङ्मुखाः सकृदित्ययमर्थः स्यात्। योगविभागे सति प्राङ्मुखास्त्रिः। त्रिदिङ्मुखाः सकृदित्ययमर्थो लभ्यते। त्रिदिङ्मुखाश्च यथासङ्ख्येन त्रीन् पादान् ब्रूयुः। चतुर्थवचनं त्रिरधिकारनिवृत्त्यर्थं। सर्वे प्रायश्चित्तादि समापयेयुः। ततो यथाशय्यं शेरते॥ ११॥

**संहाय सौर्याणि स्वस्त्ययनानि च जपित्वाऽन्नं संस्कृत्य ब्राह्मणान् भोजयित्वा स्वस्त्ययनं वाचयीत। ॥ १२ ॥ ॥ ३ ॥**

संहाय सङ्गत्येत्यर्थः। इदानीं सङ्गतिविधानात् पूर्वं यथाशय्यं शेरत इति गम्यते। समागम्य उदित आदित्ये सौर्याणि स्वस्त्ययनानि च जपेयुः। सूर्यो नो दिवः। उदु त्यं जातवेदसमिति नव। चित्रं देवानां। नमो मित्रस्य. इत्येतेषां सौर्यसञ्ज्ञा कृता। स्वस्तिशब्दवन्ति स्वस्त्ययनानि. आ नो भद्राः स्वस्ति नो मिमीतां परावतो ये दिधिषन्त आप्यमित्येतानि। अन्नसंस्कारवचनं चरुशेषात् ब्राह्मणभोजननिवृत्त्यर्थं। तेनानुप्रवचने चरुशेषादिति सिद्धम्॥ १२॥

इति द्वितीये तृतीया कण्डिका॥ ०॥

## हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः। ॥ १ ॥

हेमन्तशिशिरावृतू। अपरपक्षाः कृष्णपक्षाः। अष्टका इति कर्मनाम। एतदुक्तं भवति। मार्गशीर्षादिचतुर्षु मासेषु ये कृष्णपक्षाश्चत्वारस्तेषु याश्चतस्रोऽष्टम्यस्तास्वष्टकाः कार्या इति। ऋतुद्वयमध्ये यदि मलमास आगच्छति तस्मिन्मासे न कर्तव्यं इत्येवमर्थं चतुर्ग्रहणम्। अपि च बहुवचनस्य त्रिष्वेव चरितार्थत्वाच्छाखान्तरदर्शनाच्च ऊर्ध्वमाग्रहायण्यास्तिस्रोऽष्टका इति तिस्र एव स्युस्तन्निवृत्त्यर्थं चतुर्ग्रहणम्॥ १ ॥

## एकस्यां वा॥ २ ॥

एकस्यामेवाष्टम्यामष्टकाः कार्याः. चतसृषु वेति विकल्पः॥ २ ॥

## पूर्वेद्युः पितृभ्यो दद्यात्॥ ३ ॥

सप्तम्यामित्यर्थः। पितृशब्देन पितृपितामहप्रपितामहा उच्यन्ते। ‘अन्वष्टक्ये पितृभ्यो दद्याद्’ इत्यस्यां चोदनायां पिण्डदानं दृष्टं। अतश्चोदनासामान्यादिहापि परिगृह्यते। ब्राह्मणभोजनं च कार्यमिति वक्ष्यामः। तेन पूर्वेद्युः पितृभ्यः पिण्डान् भोजनं च दद्यादित्यर्थः। पिण्डदाने इतिकर्तव्यतापेक्षास्ति। इह च तस्या अनाम्नानात् प्रकरणान्तरविहितोऽपि पिण्डपितृयज्ञकल्पः परिगृह्यते। शक्यते चासौ ग्रहीतुं शास्त्रसम्बन्धकरणात्। अपि चान्व-

इत्यये पिण्डपितृयज्ञकल्पो दृष्टः. स चोदनासामान्यादिहापि भवति. *अत्रैव तर्हि पिण्डपितृयज्ञकल्पेनेति कस्मान्नोक्तं। स्त्रीभ्य-श्शूद्रेभ्यश्चाधिकारार्थं तन्नोक्तं. स च कल्पोऽत्राग्नौ करणे पाकयज्ञ-तन्त्रस्य बाधको भवति. एककार्यत्वात्। भोजनं तु पार्वणवद्भवति। भोजनेऽपि तन्त्रस्यापेक्षितत्वात्. तच्च भोजनं पैतृकमेवेति कृत्वा पार्वणमेव तन्त्रं परिगृह्यते तस्य पैतृकत्वात्॥ ३॥

तत्र विशेषमाह।

## ओदनं कृसरं पायसं॥ ४॥

पिण्डपितृयज्ञकल्पो भवतीत्युक्तं। तत्र च नित्येऽग्नौ चरुश्रपण-मस्ति। तस्य स्थाने एतानि त्रीणि नित्येऽग्नौ श्रपयेत्।

ओदनस्तु प्रसिद्धः स्यात्पायसः पयसा शृतः।
ओदनस्तिलमिश्रस्तु कृसरः परिकीर्तितः।
तिलकल्कान्विनिक्षिप्य शृतो वा कृसरो भवेत्॥ ४॥

## चतुःशरावस्य वाऽपूपान्॥ ५॥

चतुःशरावपरिमितस्य वा धान्यस्य पेषणं कृत्वा अपूपान् श्रप-येत्। अपूपाः पिष्टमयाः। बहुसाधनसाध्यत्वादपूपानां स्त्रीकर्तृ-कत्वाच्च नित्येऽग्नौ श्रपणं न सम्भवतीति गृह्यसिद्धानामेवोपादान-मिच्छन्ति। वाशब्दो विकल्पार्थः। पूर्वाणि वा त्रीणि इदं वैकं द्रव्यमिति। भोजने तु नायं द्रव्यनियमः. अपि तु होम एव।

* तर्हीति सं० पु० पाठः।

अष्टका हि चतस्रः स्युः पूर्वाह्णानि तथैव च ।
द्रव्यत्रयत्वादेकत्वान्न यथासङ्ख्यसम्भवः ॥
प्रत्यष्टकं हि पूर्वेद्युस्त्रीणि द्रव्याण्यथापि वा ।
*अपूपद्रव्यमेकं वा नान्या व्याख्यानकल्पना ॥ ५ ॥

## उदीरतामवर उत्परास इत्यष्टाभिर्हुत्वा यावतीभिर्वा कामयीत ॥ ६ ॥

यावतीभिर्वाऽधिकाभिरेवञ्जातीयकाभिः पितृलिङ्गकाभिः कामयीत कामयेत तावतीभिर्जुहुयात् । एतदुक्तं भवति । पिण्डपितृयज्ञविधाने नेध्माधानान्तं कुर्यात्. चरुश्रपणे विशेषः उक्तः । ततो ब्राह्मणपञ्चौचाद्याच्छादनप्रदानपर्यन्तं पार्वणवत् कृत्वा ओदनादिभ्यस्त्रिभ्योऽन्नमुद्धृत्य घृताक्तं कृत्वाऽनुज्ञाप्य अग्नौ करणमन्त्रयोः स्थाने उदीरतामवर उत्पराम इत्यष्टाभिश्चतुर्दशभिर्वा हुत्वा मेक्षणमनुप्रहृत्य ब्राह्मणेभ्योऽन्नदानादिशेषनिवेदनान्तं पार्वणवत् कृत्वा भुक्तवत्सु पिण्डपितृयज्ञवन्निनयनादिपात्रोत्सर्गान्तं कृत्वा ततः श्राद्धशेषं समापयेत् इति ॥ ६ ॥

## अथ श्वोभूतेऽष्टकाः पशुना स्थालीपाकेन च ॥ ७ ॥

अथेत्यानन्तर्यार्थः । श्वोभूतेऽष्टम्यामित्यर्थः । या अष्टकाः कार्या इत्युक्तास्ताः श्वोभूते पशुना स्थालीपाकेन च कार्या इत्यर्थः । अथाष्टका इत्येतावत्युच्यमाने अथशब्दसम्बन्धात् पूर्वेद्युश्चाष्टकाः

* अपूपद्रव्यमेवैकमिति सं० पु० पाठः ।

कार्या इत्याशङ्का स्यात्. तस्मात् स्त्रीभूतग्रहणं। पश्वङ्गभूतस्य स्थालीपाकस्याविधेयत्वात् स्थालीपाकान्तरमिदमिति अवगम्यते। चशब्दश्चायं वाशब्दस्य स्थाने द्रष्टव्यः। तेन पशुना वा स्थालीपाकेन वेत्यर्थः। शास्त्रान्तरे च स्पष्टं वचनमस्ति. 'पशोरभावे स्थालीपाकः प्रवर्तते' इति ॥ ७ ॥

## अप्यनडुहो यवसमाहरेत् ॥ ८ ॥

अपिशब्दो विकल्पार्थः। एतदुक्तं भवति। पशुः कार्यस्तस्यासम्भवे स्थालीपाकस्तस्याप्यसम्भवे अनडुहो यवसम्प्रयच्छेदिति। शकटवहनसमर्थो बलीवर्दोऽनड्वान् ॥ ८ ॥

## अग्निना वा कक्षमुपोषेत् ॥ ९ ॥

तस्याप्यसम्भवे अग्निना कक्षं दहेत् ॥ ९ ॥

## एष मेऽष्टकेति ॥ १० ॥

यवसदाने कक्षदहने च एवं मनसा ध्यायेदित्यर्थः ॥ १० ॥

## न त्वेवानष्टकः स्यात् ॥ ११ ॥

इदमस्य प्रयोजनं। चत्वारः पक्षाः उक्तास्तत्र पूर्वालाभे उत्तरोत्तरः प्रवर्तत इति। एवमप्यष्टकाः कार्याः. न त्वेवानष्टकः स्यादित्यर्थः। अथ वा शास्त्रान्तरे यानि पक्षान्तराण्युक्तानि अपि वा अनूचानेभ्य उदकुम्भमाहरेत्. अपि वा श्राद्धमन्त्रानधीयीतेति। तथा वा कुर्यात् नत्वेवानष्टकः स्यादित्यर्थः ॥ ११ ॥

तां हैके वैश्वदेवीं ब्रुवत आग्नेयीमेके सौर्यामेके प्राजापत्यामेके रात्रिदेवतामेके नक्षत्रदेवतामेके ऋतुदेवतामेके पितृदेवतामेके पशुदेवतामेके ॥ १२ ॥

एतेऽष्टौ देवताविकल्पाः। तत्र यदा आग्नेय्यष्टका क्रियते तदा वपापशुस्थालीपाकावदानानि त्रीण्यपि अग्नये स्वाहेति जुहुयात्। केवलस्थालीपाकमप्यनेनैव जुहुयात्। *एवमितरेष्वपि नेयं। तत्रानाद्यानां पञ्चाणामयुक्तत्वज्ञापनार्थमाद्ये हशब्दं पठितवान्। मन्त्रास्तावदष्टकार्थत्वेन गृह्यस्मृतिपारम्पर्येण स्मर्यन्ते। स्मृतिश्च प्रमाणं। एवमष्टकार्थत्वेन प्रमाणावगतेषु मन्त्रेषु तान् परित्यज्याग्न्यादीनां नामधेयेन होम इत्येतदयुक्तं वक्तुमिति हृदि कृत्वा हशब्दं पठितवान्। तस्मात् सर्वदा मन्त्रैरेव होमः कार्यः, न कदाचिदपि नामधेयेनेति सिद्धम्। एतमेव पक्षमुत्तरत्रापि †समर्थयते, वैश्वदेवीं ब्रुवत इति बहुदेवत्यां ब्रुवत इति। अयमर्थः। या या मन्त्रेषु ‡लिङ्गिनी सा सा सर्वात्र देवता भवति, नैवाग्न्यादय एकैकैव देवता भवतीत्यर्थः। बहुदेवत्यो हि वैश्वदेवशब्दः श्रूयते, 'यथा प्रभुक्रैतुदेवी मनीषेति वैश्वदेवं' इति। उक्तं च नैरुक्तैः, 'यत्र किञ्चित् बहुदेवत्य तद्वैश्वदेवानां स्थाने युज्यते' इति। प्रकारान्तरेणास्माभिर्भाष्यकारमतमेवानुसृतमिति निरवद्यं।

* एवमुत्तरेष्वपीति सं॰ पु॰ पाठः।
† समर्थ इष्यत इति सं॰ पु॰ पाठः।
‡ लिङ्गतेति सं॰ पु॰ पाठः।

*अपि चैवं व्याख्या। आग्नेयोमेके। तेषामयमभिप्रायः. सत्यं अष्टकार्थत्वेन मन्त्राणां स्मरणात् सर्वदा मन्त्रैरेव होमः कार्यः. तथाप्याग्नेयो भवति। अग्निरेव सर्वेषु मन्त्रेषु उद्देश्यो भवतीत्यर्थः। यानि तेषु देवतान्तरवाचीनि पदानि तानि कथञ्चिद्गौण्या लक्षणया वा योगेन वा अग्निवाचीनि भवन्ति। यथा प्रयाजानामाग्नेयत्वे समिदादिशब्दास्तस्यैव कथञ्चिद्वाचकाः. *एवं मन्त्रा अपीति। एवमुत्तरेष्वपि पक्षेषु योज्यं। एवं देवताविप्रतिपत्तौ सत्यां इशब्दं प्रयुक्तवान्। बहुदेवत्ये त्वयमेव पक्षो युक्तः लक्षणाद्याश्रयणे कारणाभावादिति ज्ञापयितुं। प्रयाजेषु तु कारणं निरुक्तादिज्ञेयम्॥ १२॥

**पशुकल्पेन पशुं संज्ञप्य प्रोक्षणोपाकरणवर्जं वपामुत्खिद्य जुहुयाद्. वह वपां जातवेदः पितृभ्यो यत्रैनान्वेत्थ निहिताः पराके मेदसः कुल्या उपैनान् स्रवन्तु सत्या एता आशिषः सन्तु सर्वाः स्वाहेति॥ १३॥**

पशुकल्पेनेतिवचनं प्रोक्षणप्रतिषेधः पाशुकस्यैव प्रोक्षणस्य भवति न पश्वङ्गभूतस्यालोपाकप्रोक्षणस्येत्येवमर्थं। संज्ञप्येत्यनुवादः। उत्खिद्येतिवचनं उत्खिद्य सर्वदाऽनयैव वपां जुहुयादित्येवमर्थं। तेनाग्न्यादिनामधेयेन होम इत्याद्याः पक्षाः निरस्ता भवन्ति॥ १३॥

* अपि वैश्वदेवं येषां व्याख्या इति सं० पु०

† एवमन्त्रापीति सं० पु० पाठः।

अथावदानानां स्थालीपाकस्य च. अग्ने नय सुपथा राये अस्मानिति द्वे। ग्रीष्मो हेमन्त ऋतवः शिवा नो वर्षाः शिवा अभया शरन्नः। संवत्सरोऽधिपतिः प्राणदो नोऽहोरात्रे कृणुतां दीर्घमायुः स्वाहा। शान्ता पृथिवी शिवमन्तरिक्षं द्यौर्नो देव्यभयन्नो अस्तु। शिवा दिशः प्रदिशः उद्दिशो न आपो विद्युतः परिपान्तु सर्वतः स्वाहा। आपो मरीचीः प्रवहन्तु नो धियो धाता समुद्रो वहन्तु पापं भूतं भविष्यदभयं विश्वमस्तु मे ब्रह्माऽधिगुह्यः स्वाराक्षराणि स्वाहा। विश्व आदित्या वसवश्च देवा रुद्रो गोप्तारो मरुतः सदन्तु। ऊर्जं प्रजाममृतं पिबमानः प्रजापतिर्मयि परमेष्ठी दधातु स्वाहा। प्रजापते न त्वदेतान्यन्यः॥ १४॥

स्थालीपाकशब्देनात्र द्वय गृह्यते। एकवचनं जात्यभिप्रायं। तेनायमर्थः। पश्वङ्गस्थालीपाकस्य अवदानानाञ्च स्थालीपाकान्तरस्य च एते सप्त होममन्त्रा भवन्तीति॥ १४॥

## स्विष्टकृत्यष्टमी॥ १५॥

अष्टमीग्रहणं सर्वदा त्रिष्वपि इयमाहुतिरष्टमी भवतीत्येवमर्थं। तेन मन्त्रैरेव होमो न कदाचिन्नामधेयेनेति सिद्धं। अपि च यदा पश्वङ्गभूतस्थालीपाकः पृथक् हूयते तदा स्विष्टकृदपि पृथक्

कार्यः इत्येतत् प्रदर्शितं भवति। सर्वत्र च पृथग्घोमे स्विष्टकृदपि पृथक्कार्यः. पृथग्घोमे हि अवदानानां सप्त स्थालीपाकस्य च सप्त। ततः सौविष्टकृती पञ्चदशी स्यात्। सहपक्षे त्वष्टमी भवति। एवं च पृथग्घोमनिवृत्त्यर्थमष्टमीग्रहणं वेदितव्यं॥ १५॥

ब्राह्मणान् भोजयेदित्युक्तं॥ १६॥  ॥ ४॥

ब्राह्मणान् भोजयित्वा स्वस्त्ययनं वाचयीतेति यदुक्तं तदिहापि कार्यमित्यर्थः। एतदुक्तं भवति। होमं समाप्य ब्राह्मणपञ्चौपाद्याच्छादनान्तं कृत्वा भोजनार्थादन्नादुद्धृत्य घृताक्तं कृत्वा पाणौ होमं कृत्वा भुक्तवत्स्वनाचान्तेषु पिण्डान् दत्त्वा स्वस्त्ययनं वाचयित्वा श्राद्धशेषं समापयेदिति। अथवा ब्राह्मणान् भोजयेदिदमनन्तरे कर्मणीत्युक्तं। यथोक्तं पूर्वेद्युः कर्म तत्र च भोजयेदित्युक्तं द्रष्टव्यमित्यर्थः। इतिशब्दोऽन्नभोजनपरामर्शी। इदमष्टम्यां भोजनं श्राद्धमित्युपदेशः। शास्त्रान्तरे च दृश्यते. तस्माच्छ्राद्धमिति सिद्धं॥ १६॥

इति द्वितीये चतुर्थी कण्डिका॥ ०॥

---

अपरेद्युरन्वष्टक्यं ॥ १ ॥

अपरस्मिन्नहनि नवम्यामन्वष्टक्यं नाम कर्म कार्यमित्यर्थः ॥१॥

तस्यैव मांसस्य प्रकल्प्य दक्षिणाप्रवणेऽग्निमुपसमाधाय परिश्रित्योत्तरतः परिश्रितस्य द्वारं कृत्वा समूलं बर्हिस्त्रिरपसलैरविधून्वन् परिस्तीर्य हवींष्यासादयेदोदनं कृसरं पायसं दधिमन्थान् मधुमन्थांश्च ॥ २ ॥

योऽष्टम्यां पशुः कृतः तस्यैव मांसं ब्राह्मणभोजनार्थं प्रकल्प्य संस्कृत्येत्यर्थः। भोजनार्थत्वं शास्त्रान्तरादवगतं। दक्षिणाप्रवण इति प्राक्प्रवणनिवृत्त्यर्थं। उपसमाधायेति व्याख्यातं। अग्नितिरस्करण्यादिभिः परिश्रित्योत्तरतो द्वारं करोति। पुनः परिश्रितस्येतिवचनं परिश्रयणस्यानित्यत्वज्ञापनार्थं। अत्रापि पिण्डपितृयज्ञकल्पोऽस्ति तत्र विशेषमाह। उभौ परिस्तीर्येत्यस्मिन् काले समूलं बर्हिर्गृहीत्वा अपसलैरप्रदक्षिणं अविधून्वन्नकम्पयंस्त्रिः परिस्तृणीयात्। आसादयेदभिघार्य स्थालीपाकमित्यस्मिन् काले एतानि पञ्चासादयेत्। एषां नित्ये श्रपणं कार्यं गृह्यकर्मणि सर्वत्र चरूणां नित्येऽग्नावेव श्रपणं कार्यं न लौकिके. अन्यत्र प्रतिषेधात्। अपयित्वैककपालं चेत्यत्र अपयित्वेतिवचनस्य चरुवर्जितानां धानादीनां नित्याग्निश्रपणनिषेधपरत्वेनापि सम्भवात्।

सक्तवो दधिमिश्रास्तु दधिमन्थाः प्रकीर्त्तिताः।
मधुमन्थाः प्रकीर्त्यन्ते मधुमिश्रास्तु सक्तवः ॥

उल्लेखनकाले द्वे लेखे लिखेत्। उभे च मध्ये दाच्छिन्नैरवस्तृणीयात् ॥ २ ॥

## पिण्डपितृयज्ञे कल्पेन ॥ ३ ॥

इदं कर्म्म पिण्डपितृयज्ञविधानेन कार्यमित्यर्थः।

अग्निप्रणयनं पात्रं सोमायेत्यादिमन्त्रकौ।

उपस्थानं प्रवहणं निनयाद्यतिदिश्यते ॥ ३ ॥

## हुत्वा मधुमन्थवर्जं पितृभ्यो दद्यात् ॥ ४ ॥

इध्माधानान्तं कृत्वा ब्राह्मणपञ्चौचाद्याच्छादनान्तं कृत्वा ओदनादिभ्यश्चतुर्भ्योऽन्नमुद्धृत्य मधुमन्थवर्जं घृताक्तमनुज्ञाप्याग्नावाहुतिद्वयं कृत्वा मेचणमनुप्रहृत्य शेषनिवेदनान्तं कृत्वा पितृभ्यः पिण्डान्निपृणीयादित्यर्थः। पिण्डदाने मधुमन्था अपि ग्राह्याः ॥ ४ ॥

## स्त्रीभ्यश्च सुरा चाचाममित्यधिकं ॥ ५ ॥

मात्रे पितामह्यै प्रपितामह्यै च पिण्डान्निपृणीयात्। तत्र चोदनादिपञ्चभ्यः सुरा चाचामश्चाधिकं भवतीत्यर्थः। पित्रादित्रयाणामेव पिण्डपितृयज्ञस्य दृष्टत्वात् तद्विधानं स्त्रीणां न प्राप्नोतीति कृत्वा पिण्डपितृयज्ञकल्पेनेत्येतदत्रानुवर्त्तनीयं।

ओदनाग्रद्रवं प्राहुराचामं हि मनीषिणः।

गौडी माध्वी च पैष्टी च सुरा तु त्रिविधा स्मृता ॥

अधिकवचनं पञ्चानामबाधनार्थं ॥ ५ ॥

## कर्षूष्वेके द्वयोः षट्सु वा ॥ ६ ॥

द्वयोर्लेखयोरुभयेषां पिण्डनिपरणमुक्तं। कर्षा नामावटाः। कर्षा च कर्षश्च कर्षः। तास्वेके इच्छन्ति। यदा द्वे कर्षा तदा आयते भवतः। यदा षट् तदा परिमण्डलाः। द्वयोरितिवचनात् कर्षावित्येकशेषो लभ्यः॥ ६ ॥

## पूर्वासु पितृभ्यो दद्यात् ॥ ७ ॥

पूर्वा च लेखा पूर्वा च कर्षूः पूर्वाश्च कर्षः. ताः पूर्वाः। एतदुक्तं भवति। द्विलेखाद्विकर्षूषट्कर्षूपक्षेषु पूर्वस्यां लेखायां पूर्वस्यां कर्ष्वां पूर्वासु कर्षूषु पितृभ्यो निपृणीयादिति॥ ७ ॥

## अपरासु स्त्रीभ्यः ॥ ८ ॥

पूर्ववदेकशेषः। अत्र किञ्चिद्वक्तव्यमस्ति. द्वे लेखे इत्युक्तं। पितृषु च स्त्रीषु च पृथक् पृथक् नवावरा अयुजो वा ब्राह्मणा भवन्ति। प्रकृतौ समर्थनिगमेषु यजुर्निगदेषु विकृतावूह उक्तः। तेन स्त्रीपात्रेषु तिलावपने तिलोऽसीति मन्त्रे पितृशब्दस्योहो न कार्यः. प्रकृतावसमर्थत्वात्। पार्वणं हि तस्य प्रकृतिः। तत्र च पित्रादयस्त्रयोऽभिधातुमभिप्रेताः. न च पितृशब्दस्तान् वक्तुं समर्थः। अथोच्यते। तत्रापि पितृपात्रमेवास्य प्रकृतिः. उत्तरे विकृती। पितृपात्रे च पितृशब्दः समर्थः. विभक्तिमात्रं त्वसमर्थं. तेनोत्तरयोः

पात्रयोः पितृशब्दस्य स्थाने पितामहप्रपितामहशब्दौ बहुवचनान्तौ वक्तव्याविति। एतदयुक्तं। समानप्रकरणे प्रकृतिविकृतिभावो नास्तीति ज्ञापितमेतद्भाष्यकारेण 'रात्र्यापदेनेति तु प्रणयेद्' इत्यत्र। तेन त्रिष्वपि पितृशब्द एव प्रयोज्य इति सिद्धं। यथा तत्र कथञ्चिद्गौण्या लक्षणया वान्यथा वा त्रीनाह तथैवात्रापि मातॄरभिदध्यात्। तेनोहो न कार्यः। अथ तत्रोत्तरयोः पात्रयोरूहोऽभ्युपगम्यते। तर्हि शुन्धन्तां पितर इत्यत्र त्रयाणां वचनमपार्थकं स्यात्. तस्मात् पितृशब्द एव सर्वदा प्रयोज्य इति सिद्धं। शुन्धन्तां पितर इत्यत्र तु विभक्तिमात्रं समर्थं. प्रकृतिस्तु समर्थैव। तेन तस्या ऊहः कार्यः। 'शुन्धन्तां मातरः शुन्धन्तां पितामह्यः शुन्धन्तां प्रपितामह्य इत्येतत्तेऽसौ ये च त्वा' इत्यत्र यदि द्वे मातरौ स्यातां पितामह्यौ प्रपितामह्यौ वा तदा असावित्यत्र द्वयोरपि नामनी ब्रूयात्। यदा बह्व्यस्तदा बह्वीनामपि नामानि ब्रूयात्। तेशब्दस्य स्थाने द्वे मातरौ चेद्वामित्यूहः। बह्व्यश्चेद व इत्यूहः। ये-शब्दस्य केचिदूहेन स्त्रीलिङ्गं कुर्वन्ति. तद्विचार्यं। एतत्ते तत ये च त्वामन्वित्यस्यायमर्थः। हे तत एतत्पिण्डरूपं अन्नं तुभ्यं. ये चान्येऽत्र त्वामनुयन्ति तेभ्यश्चेत्यर्थः। अनुयायिनश्च यदि स्त्रिय एव स्युः तदोहो युज्यते। यदि पुमांस एव पुमांसश्च स्त्रियश्च वा तदा न युज्यते पुमान् स्त्रिया इति. पुंस एकशेषात्। आचार्येणाप्युक्तं। 'पुंवन्मिथुने' इति [आ० श्रौ०]। 'अनुयायिनश्च पुमांसश्च स्त्रियश्चेति प्रतिभाति' इति बोधायनवचनात्। इत्थं हि तेन पिण्डदाने पठितो मन्त्रः। एतत्ते ततासौ ये च त्वामत्र ये त आचार्या ये ते सखायो ये ते

गुरवो ये ते ज्ञातयो ये तेऽमात्या ये तेऽन्तेवासिनस्तेभ्यश्चैतत्ता-भ्यश्च स्वधा नम इति तेनोहो न कार्यः। आपस्तम्बेन तु 'एतत्ते मा-तरसौ याश्च त्वामन्वानु' इति मन्त्रः पठित इति कृत्वा केचिदूहं कुर्वन्ति. तच्चिन्त्यं। स्त्रीद्वित्वे युवामन्वानु बहुत्वे युष्मानन्वान्विति। अत्र पितरः अमीमदन्त पितर इत्यत्र च पितृशब्दस्योहो न कार्यः। प्रकृतावसमर्थत्वात्। पिण्डपितृयज्ञो हि तयोः प्रकृतिः। तत्र च त्रयोऽभिधातुमभिप्रेताः। तस्मादनूहः उभयपिण्डानां च सकृदेवानु-मन्त्रणं कार्यं शक्यत्वात् न पृथक्। असावभ्यङ्क्ष्वासावभ्यङ्क्ष्वेत्यत्र च स्त्रीद्वित्वे बहुत्वे च अमीशब्दस्योहः। अभ्यजाथां. अभ्यङ्ध्वं. अञ्जाथां. अङ्ध्वमिति च यथार्थं। स्त्रीणां पृथग्वासो दद्यात्। असंसर्गित्वात्। एतद्वः पितर इत्यत्रोहो न कर्त्तव्यः, असमर्थत्वा-देव मन्त्रावृत्तिरस्त्येव। पितृपिण्डान् स्त्रीपिण्डांश्च सकृदेवो-पतिष्ठते शक्यत्वात् न पृथक्। अनूहश्च पूर्ववत्। मनोऽन्वाहुवा-मह इत्यादेश्चानूहः पूर्ववत्। तस्मादृचं नोहेदिति प्रतिषेधाच्च। प्रवाहणं चोभयपिण्डानां युगपदेव शक्यत्वात्. अनूहश्च पूर्ववत्. उक्ताच्च। 'वीरं मे दत्त पितर.' इति पितृणां मध्यमपिण्डमादा-यानेनैव स्त्रीणामपि मध्यममाददीत. अनूहश्च पूर्ववत्। आधत्त पितर इति पिण्डद्वयं प्राशयेदनूहश्च पूर्ववत्. उक्ताच्च। यत्र त्वृचि ऊहमिच्छन्ति तत्र विदधाति 'आत्मनि मन्त्रान् सन्नमयेदिति. इति नव' इति च। एवं निनयनवर्जं पितृशब्दस्योहो नास्तीत्युक्तं। तत्र यदुच्यते. पितृशब्दो बहुवचनान्तः पित्रादींस्त्रीनेव वक्ति सा-हचर्यात्. यथा मित्राविति वरुणाविति चोक्ते मित्रावरुणौ प्रती-

येते सादृश्यर्यात्. तद्वदत्रापि मातृस्तु वक्तुं न शक्नोति। तत्-सादृश्यस्य क्वचिदप्यप्रतीतत्वात्. तस्मादूहः कार्य इति। तत्र ब्रूमः। असमर्थत्वादूहो नास्तीत्युक्तमेव केवलमभिधानं सम्पादनीयं। सपिण्डीकरणेन हि प्रेतत्वं निवर्त्त्य पितृत्वं नाम संस्कारविशेषः शास्त्रगम्यः प्राप्यते. तच्च मातृष्वपि अविशिष्टमिति मातॄरपि अभिधत्ते पितृशब्दः। एवं च कृत्वा एकोद्दिष्टे शास्त्रान्तरदृष्टः पितृशब्दप्रतिषेधोऽप्युपपन्नः. ऊहवादिनोऽतिप्रसङ्गश्चास्ति। मात्रादयस्त्रयोऽपि शब्दाः प्रसज्यन्ते। तेनाप्येवं नेष्यते। पुनरपि बहुविद्भिर्विचार्य कार्यमित्यलमतिविस्तरेण ॥ ८ ॥

## एतेन माघ्यावर्षं प्रोष्ठपद्या अपरपक्षे ॥ ९ ॥

एतेनेति पूर्वेद्युः प्रभृति कृत्स्नकर्मातिदेशः। एतदुक्तं भवति। प्रोष्ठपद्याः समीपे योऽपरपक्षस्तत्राष्टम्यां माघ्यावर्षं नाम कर्म कर्त्तव्यं। तच्चैतेनाष्टकाकर्मणा व्याख्यातमिति। अत्रापि त्रिष्वहःसु कार्यमित्यर्थः ॥ ९ ॥

## मासि मासि चैवं पितृभ्योऽयुक्षु प्रतिष्ठापयेत् ॥ १० ॥

अपरपक्ष इत्यत्रापि सम्बध्यते. मध्यगतस्य विशेषाभावात् प्रयोजनवत्त्वाच्च। तच्च पूर्वपक्षनिवृत्त्यर्थं। एवमित्यष्टकोपदेशार्थं। तेनाष्टकामिष्टातिदिश्यते. अनन्तरत्वात्। पितृभ्य इति मातृनिवृत्त्यर्थं। प्रतिष्ठापयेत् कुर्यादित्यर्थः। एतदुक्तं भवति। प्रतिमासमपरपक्षे

अयुग्मासु तिथिषु अन्वष्टक्यवत् पितृभ्य एव श्राद्धं कुर्यादिति। समानकालत्वात् समानकार्यत्वाच्च पार्वणस्यास्य विकल्पः। एवं वा सूत्रच्छेदः। मासि मासि चैवं पितृभ्यः प्रतिमासमपरपक्षे अन्वष्टक्यवत् पितृभ्य एव कुर्यादित्यर्थः। अयुक्षु प्रतिष्ठापयेत्। श्राद्धकर्मणि सर्वमयुग्मासु सङ्ख्यासु प्रतिष्ठापयेत्. गन्धमाल्यादि सकृद्देयं त्रिः पञ्चकृत्वो वेत्यादि॥ १० ॥

## नवावरान् भोजयेत् ॥ ११ ॥

नवप्रसङ्गः प्रकृतं निवर्त्तयति। तेनान्वष्टक्ये नवावरान् भोजयेन्नियमेन॥ ११ ॥

## अयुजो वा ॥ १२ ॥

अशक्तौ प्रागप्ययुजो भोजयेत् सप्त पञ्च त्रीनेकं वा। सप्तपक्षे एकस्यैक इतरयोस्त्रयस्त्रयः. पञ्चपक्षे एकस्य त्रय इतरयोरेकैकः। इदं चान्वष्टक्य एव॥ १२ ॥

## युग्मान् वृद्धिपूर्त्तेषु ॥ १३ ॥

'पुंसवनसीमन्तोन्नयनचौलकर्मोपनयनविवाहा इति पञ्चाग्न्याधेयादीनि च श्रौतानि वृद्धिश्राद्धस्य विषयः' इत्येके। 'अन्ये षोडश संस्काराः श्रवणाकर्मादयश्च श्रौतानि च' इत्याहुः। 'अनिष्ट्वा तु पितॄन् श्राद्धे वैदिकं कर्म नारभेद्' इति स्मृतेः। वापीकूपतडागारामा-

घ्यापनादिपूर्वश्राद्धस्य विषयः। उभयत्र युग्मान् भोजयेत्॥ ॥ १३ ॥

अयुग्मानितरेषु ॥ १४ ॥

पूर्वेद्युरष्टम्यां काम्य एकोद्दिष्ट इति चतुर्ष्वयं विधिः. मासि मासि चेत्यत्रान्वष्टक्यवत्। पार्वणे तु वक्ष्यति। एवमष्टविधेष्वपि श्राद्धेषु ब्राह्मणपरिमाणमुक्तं ॥ १४ ॥

प्रदक्षिणमुपचारो यवैस्तिलार्थः ॥ १५ ॥ ॥ ५ ॥

वृद्धिपूर्त्तेष्विति शेषः। अत्र प्रदक्षिणमिति वचनादितरश्राद्धेषु प्रसव्यमुपचार इति गम्यते। तिलकार्ये यवान् कुर्यात्। यज्ञोपवीतयुग्मकर्मादीनामुपलक्षणमिदं ॥ १५ ॥

इति द्वितीये पञ्चमी कण्डिका ॥०॥

---

रथमारोक्ष्यन्नाना पाणिभ्यां चक्रे अभिमृशेत्, अ-इन्ते पूर्वं पादावालभेद्दृहद्रथन्तरे ते चक्रे ॥ १ ॥

इतिकारोऽध्याहार्यः। त्रयाणां वर्णानामिदं समानं भवति। रथो नाम बहुयुगो मण्डलाकृतिः। यदा रथमारोहति गमनार्थं

ततः पूर्वपक्षे चक्रे पाणिभ्यां नाना अभिमृशेत् मन्त्रेण। नानाग्रहणं युगपदेव दक्षिणेन दक्षिणं सव्येन सव्यमभिमृशेन्न पर्यायेणेत्येवमर्थं। दूरदेशगमने त्वाद्य एवारोहणेऽयं विधिर्नत्वर्थप्राप्तेष्वारोहणेषु॥ १॥

वामदेव्यमक्ष इत्यक्षाधिष्ठाने॥ २॥

अभिमृशेदिति वर्त्तते। पाणिभ्यां युगपच्चक्रनाभी अभिमृशेत् मन्त्रेण॥ २॥

दक्षिणपूर्वाभ्यामारोहेत्, वायोष्ट्वा वीर्येणारोहामीन्द्रस्यौजसाधिपत्येनेति॥ ३॥

दक्षिणपादः पूर्वौ ययोः तौ तथोक्तौ, एवम्भूताभ्यामारोहेन्मन्त्रेण॥ ३॥

रश्मीन् संमृशेदरश्मिकान् वा दण्डेन, ब्रह्मणो वस्तेजसा संगृह्णामि सत्येन वस्तेजसा संगृह्णामीति॥ ४॥

रश्मयः प्रग्रहास्तान् स्पृशेत्। अथ यद्यश्वा अरश्मिकाः स्युस्तानेव दण्डेन स्पृशेत्। मन्त्रस्तूभयत्र। बहुवचनाद्बहुयुगो रथोऽत्राभिप्रेत इति गम्यते॥ ४॥

अभिप्रवर्त्तमानेषु जपेत्, सहस्रसनिं वाजमभिवर्त्तस्व रथ देव प्रवह वनस्पते वीड्वङ्गो हि भूया इति॥ ५॥

चशब्दोऽध्याहार्यः। सारथिना नोदिता अश्वा यदा दृष्टां दिश-मभिगच्छन्ति तदा सहस्रमनिं वनस्पत इत्यृचं जपेत्। एताव-द्रथारोहणं॥ ५ ॥

एतयाऽन्यान्यपि वानस्पत्यानि ॥ ६ ॥

अभिमृशेदिति शेषः। अन्यान्यपि शकटप्रभृतीनि वानस्पत्यान्या-रोच्यन्नेतया तान्यभिमृशेत्। एतयेत्यस्मिन्नसति अन्यान्यपीत्याद्युत्तर-सूत्रस्यैव शेषः स्यात्. तस्माद्योगविभागार्थमेतयेति वचनं॥ ६ ॥

स्थिरौ गावौ भवतां वीडु रक्ष इति रथाङ्गमभिमृशेत् ॥ ७ ॥

यद्यदङ्गमस्यामृचि दृष्टन्तत्तदभिमृशेत्। गावौ अक्षं ईषां युगं चेत्यर्थः। इदञ्चाभिमर्शनं शकटादिषु न रथे. गावाविति लि-ङ्गात्। न हि रथस्य गोयुक्तत्वं द्विगोयुक्तत्वं च सम्भवति. बहुयुगत्वा-दश्वयुक्तत्वाच्च ॥ ७ ॥

सुत्रामाणं पृथिवीं द्यामनेहसमिति नावं ॥ ८ ॥

आरोहेदिति शेषः. आरुहेमेति मन्त्रलिङ्गात्। यदा यदा च नावमारोहति उदकतरणार्थं तदा तदा एतयाऽऽरोहेत्॥ ८ ॥

नवरथेन यशस्विनं वृक्षं ह्रदं वा विदासिनं प्रद-क्षिणं कृत्वा फलवतीः शाखा आहरेत् ॥ ९ ॥

नवरथेन यदा गच्छति तदायं विशेषः। वानस्पत्यजपान्तं कृत्वा

इदमपि कुर्यात्। नवोऽनुपभुक्तः। यशस्वी यशसा युक्तः। अविदासी अशोष्यः। आम्रजम्ब्वादिशाखा आहरेत्॥ ८ ॥

अन्यद्वा कौटुम्बं ॥ १० ॥

अन्यद्वा कुटुम्बोपयोगि द्रव्यमाहरेत्। आहृत्य ततः॥ १० ॥

संसदमुपयायात् ॥ ११ ॥

गृहसमीपमागच्छेदित्यर्थः॥ ११ ॥

अस्माकमुत्तमं कृधीत्यादित्यमीक्षमाणो जपित्वाऽवरोहेत् ॥ १२ ॥

जपित्वा नवरथादवरोहेत्॥ १२ ॥

ऋषभं मा समानानामित्यभिक्रामन् ॥ १३ ॥

एतत् सूक्तं गृहं प्रतिपद्यमानो जपेत्॥ १३ ॥

वयमद्येन्द्रस्य प्रेष्ठा इत्यस्तं यात्यादित्ये ॥ १४ ॥

जपेदिति शेषः। तस्मिन्नेवाहनि॥ १४ ॥

तद्वा दिवो दुहितरो विभातीरिति व्युष्टायां ॥ १५ ॥

॥ ६ ॥

जपेत्। चीण्येतानि प्रतीकानि मन्त्रसंज्ञकानि। तस्मादुपांशु स्युः। एतावान् नवरथे विशेषः॥ १५॥

इति द्वितीये षष्ठी कण्डिका॥०॥

---

## अथातो वास्तुपरीक्षा॥ १॥

उच्यत इति शेषः। उक्तोऽर्थः। अतःशब्दो हेत्वर्थः। यस्मात् गृहनिमित्ते समृद्धिव्यृद्धी भवतः तस्माद्वास्तुपरीक्षोच्यत इति। यद्येवं काम्यकर्माण्यनर्थकानि नैतदेवं न्यायविदः परिहरन्ति। *'तच्चैव हि कारणं शब्दस्येति' एवंलक्षणयुक्ते देशे वास्तु कार्यमित्याह॥ १॥

## अनूषरमविवदिष्णु भूम॥ २॥

भूमशब्दो भूमिवाचकः। यथा यवं न वृष्टिर्व्युनत्ति भूमेति। यत्र विवादो नास्ति तदविवदिष्णु॥ २॥

---

*तद्धैवेति सं० पु० पाठः।

## ओषधिवनस्पतिवत् ॥ ३ ॥

मतुपो वकारश्छान्दसः । एवंविधं यद्भूम तत्र वास्तु कार्यं ॥ ३ ॥

## यस्मिन् कुशवीरिणप्रभूतं ॥ ४ ॥

तत्र कार्यं ॥ ४ ॥

## कण्टकिक्षीरिणस्तु समूलान् परिखायोद्वासयेद-पामार्गः शार्कास्तिल्वकः परिव्याध इति चैतानि ॥ ५ ॥

समूलान् परिखायोद्वासयेदिति वर्त्तते । अपामार्गादीनां पुंलिङ्ग-त्वादेतानिति वक्तव्ये एतानीति नपुंसकवचनमन्यान्यप्येवम्प्रकाराणि वास्तुविद्यायां निषिद्धान्युद्वास्यानीत्येवमर्थं ॥ ५ ॥

## यत्र सर्वत आपो मध्यं समेत्य प्रदक्षिणं शयनीयं परीत्य प्राच्यः स्यन्देरन्नप्रवदत्यस्तत्सर्वं समृद्धं ॥ ६ ॥

यस्मिन् देशे आपः सर्वाभ्यो दिग्भ्यः आगत्य मध्यं प्राप्य ततः प्रदक्षिणं शयनीयं परीत्य प्राङ्मुखो गच्छेयुः । अप्रवदत्यः न लोपः छान्दसः । अशब्दवत्य इत्यर्थः । एतल्लक्षणयुक्तं वास्तु विद्यादृत्त-धनधान्यादिभिः सर्वैः समृद्धं भवति । एवं ब्रुवता एतत् प्रद-र्शितं भवति । सर्वत उच्छ्रितां मध्यतो निम्नामोपत्र प्राक्प्रवणां भूमिं कृत्वा गृहं कुर्यात् । तत्र प्राच्यां दिशि गृहिणः शयनीयं गृहं

कुर्यात् । शयनीयगृहस्योत्तरतोऽपां शनैः प्रदक्षिणं निर्गमनार्थं स्यन्दनिकां कुर्यादिति ॥ ६ ॥

## समवस्रवे भक्तशरणं कारयेत् ॥ ७ ॥

यत्र पथा आपो निर्गच्छन्ति स देशः समवस्रवः । प्राच्यां दिशीत्यर्थः । तत्र महानसं कारयेत् शयनीयस्योत्तरतः । ननु शास्त्रान्तरे प्राग्दक्षिणस्यां दिशि भक्तशरणं दृष्टमतः कथं प्राच्यां दिशीत्याशंक्य प्रकृतस्य स्तुतिमाह ॥ ७ ॥

## बह्वन्नं भवति ॥ ८ ॥

ऋद्धिमद्भवतीत्यर्थः । तस्मादत्रैव कार्यं ॥ ८ ॥

## दक्षिणाप्रवणे सभां मापयेत् साऽद्यूता ह भवति ॥९॥

यत्र गृही स्थिरमास्ते स्वजनैरागन्तुभिश्च सह सा सभा तां दक्षिणाप्रवणे कुर्यादुदीच्यां दिशीत्यर्थः । तत्र कृताऽद्यूता द्यूतवर्जिता भवति । दोषाश्च सन्तीत्याह ॥ ९ ॥

## युवानस्तस्यां कितवाः कलहिनः प्रमायुका भवन्ति ॥ ॥ १० ॥

अत्र कृता चेत् युवान एव सन्तः प्रमायुका भवन्ति । अल्पायुषो-

म्रियन्त इत्यर्थः । कलहप्रियाश्च कितवाश्च भवन्ति । ननु द्यूतवर्जितत्वात् कथं कितवा इति । उच्यते । कितवा इति दम्भिन इत्यर्थः । तस्मात् तत्र न कार्या. शास्त्रान्तरेऽविहितत्वादनूद्य प्रतिषिद्धवान् । क्व तर्हि कार्येत्याह ॥ १० ॥

**यत्र सर्वत आपः प्रस्यन्देरन् सा स्वस्त्ययन्यद्यूता च ॥ ११ ॥　　॥ ७ ॥**

यस्मिन् देशे सर्वाभ्यो दिग्भ्यो आप आगच्छन्ति तत्र कार्या सभा. गृहमध्य इत्यर्थः । सा शुभकरी अद्यूता च भवति ॥ ११ ॥

अथ द्वितीये सप्तमी कण्डिका ।

**अथैतैर्वास्तु परीक्षेत ॥ १ ॥**

पूर्वलक्षणासम्भवे कथमुत्तरेषां बलीयस्त्वं स्यादित्येवमर्थोऽथशब्दः । अथ विशिष्टान्येतानीति । वास्तुग्रहणं सभाधिकारनिवृत्त्यर्थं ॥ १ ॥

**जानुमात्रङ्गर्त्तं खात्वा तैरेव पांसुभिः प्रतिपूरयेत् ॥ २ ॥**

गर्त्ता नामावटः. तैरेव । तत उद्धृतैरेव ॥ २ ॥

अधिके प्रशस्तं समे वार्त्तं न्यूने गर्हितं ॥ ३ ॥

पूरिते गर्त्तादधिके पांसुराशौ प्रशस्तं वास्तु भवति। तेन समे वृत्तिमद्भवति। तस्मात् न्यूने गर्हितं कुत्सितं भवति। तस्मात् तत्र न कार्यं ॥ ३ ॥

अस्तमिते पांसुपूर्णं परिवासयेत् ॥ ४ ॥

अस्तमिते तमेव गर्त्तमद्भिः पूरयित्वा तां रात्रिं परिवासयेत्। ततो व्युष्टायां निरीक्षेत ॥ ४ ॥

सोदके प्रशस्तमार्द्रे वार्त्तं शुष्के गर्हितं श्वेतं मधुरास्वादं ॥ ५ ॥

पूर्वेण तुल्यं ॥ ५ ॥

*सिकतोत्तरं ब्राह्मणस्य ॥ ६ ॥

सिकतोत्तरं सिकताबहुलमित्यर्थः ॥ ६ ॥

लोहितं क्षत्रियस्य ॥ ७ ॥

मधुरास्वादं सिकतोत्तरमिति वर्त्तते ॥ ७ ॥

पीतं वैश्यस्य ॥ ८ ॥

अत्रापि द्वयं वर्त्तते। श्वेतं लोहितं पीतमिति त्रयो वर्णाः त्रयाणां वर्णानां विशेषाः। अन्यत् सर्वं समानं ॥ ८ ॥

---

* सिकतोत्करमिति स० पु० पाठः

तत् सहस्रसीतं कृत्वा यथादिक् समचतुरस्रं मापयेत् ॥ ९ ॥

एवं परीक्षितं वास्तु बहुसीतं कुर्यात्। बहुशः सीतया कर्षेदित्यर्थः। ततः सर्वासु दिक्षु समचतुरस्रं स्थण्डिलं कुर्यात्। चतुरस्रं चतुःकोणं मापयेत् कुर्यात्। सहस्रशब्दोऽत्र बहुवाची॥ ९ ॥

आयतं चतुरस्रं वा ॥ १० ॥

प्रागायतं चतुरस्रं वा कुर्यात्. आयतं दीर्घं। तत्रैवं क्रमः. परिव्याध इति चैतानीत्यन्तां बाह्यवास्तुपरीक्षां कृत्वा तत आन्तरीं परीक्षामथैतैर्वास्तु परीक्षेतेत्यादिं आयतं चतुरस्रं वेत्यन्तां कृत्वा यत्र सर्वत आपो मध्यं समेत्येत्यादि विज्ञेयं। ततो वक्ष्यमाणं प्रोक्षणं कुर्यात्॥ १० ॥

तच्छमीशाखयोडुम्बरशाखया वा शन्तातीयेन त्रिः* परिव्रजन् प्रोक्षति ॥ ११ ॥

'शन्न इन्द्राग्नी' इति सूक्तं शन्तातीयमिति प्रसिद्धं. तेन सूक्तेन त्रिः परिव्रजन् प्रोक्षति। सर्वत्र मन्त्रान्ते कर्मारम्भः। सिद्धं हि करणं भवति नासिद्धं. परशुना छिनत्तीति परशुवत्। मन्त्रावृत्तिरुक्ता. 'मन्त्रान्ते व्रजनारम्भः प्राचीमारभ्य पर्येति' इति॥ ११ ॥

* त्रिः प्रदक्षिणं परीति मूलपु० पाठः।

**अविच्छिन्नया चोदकधारया. आपो हि ष्ठा मयो-भुव इति तृचेन ॥ १२ ॥**

त्रिः प्रदक्षिणं परिव्रजति । अत्रापि धारावृत्तिस्तृचावृत्तिश्च. व्रजनगुणत्वात् ॥ १२ ॥

**वंशान्तरेषु शरणानि कारयेत् ॥ १३ ॥**

यावन्तस्तत्र वंशाः सम्भवन्ति तत्र द्वयोर्द्वयोर्वंशयोरन्तरेषु कुड्यादिभिः पृथक्कृत्य अपवरकादिशरणानि कारयेत्। शरणान्यवान्तरगृहाणि ॥ १३ ॥

***गर्त्तेष्ववकाशीपालमित्यवधापयेत्. †नास्याग्निर्दाहुको भवतीति विज्ञायते ॥ १४ ॥**

सर्वासां स्थूणानां गर्त्तेषु अवकां शीपालं च अवदध्यात्। एवं कृते नास्याग्निर्दाहुको भवति इति श्रूयते ॥ १४ ॥

**मध्यमस्थूणाया गर्त्तेऽवधाय प्रागग्रोदग्रान् कुशानास्तीर्य व्रीहियवमतीरप आसेचयेत्. अच्युताय भौमाय स्वाहेति ॥ १५ ॥**

अस्या गर्त्ते अयं विशेषः। अवकाशीपालञ्चावधाय कुशाना-

---

* गर्त्तेष्ववकां शीपालमिति मू० पु० पाठः। † नास्याग्निरिति मू० पु० पाठः। गर्त्तोद्वटेषु त्ववकां शीपालं चावधापयेदिति भट्टकुमारिलकारिका।

स्तीर्य पश्चादासिंचेन्मन्त्रेण। अवधायवचनं अवकाशोपालयोरवधानप्राप्त्यर्थं ॥ १५ ॥

अथैनामुच्छ्रियमाणामनुमन्त्रयेत इहैव तिष्ठ निमिता तिल्विलास्तामिरावतीं मध्ये पोषस्य तिष्ठन्तीं। आ त्वा प्रापन्नघायव आ त्वा कुमारस्तरुण आ वत्सो जायतां सह। आ त्वा परिश्रितः कुम्भ आ दध्नः कलशैरयन्निति ॥ १६ ॥ ॥ ८ ॥

मध्यमस्थूणां गर्त्ते आधीयमानां अनुमन्त्रयेत मन्त्राभ्यां ॥ १६ ॥

इति द्वितीये अष्टमी कण्डिका ॥ ०॥

वंशमाधीयमानं ॥ १ ॥

अनुमन्त्रयेतेति वर्त्तते ॥ १ ॥

ऋतेन स्थूणामधिरोह वंश द्राघीय आयुः प्रतरन्दधना इति ॥ २ ॥

अनेन मध्यमस्थूणाया उपर्याधीयमानं वंशमनुमन्त्रयेत। अन्ये तु प्रतिवंशमावृत्तिमिच्छन्ति ॥ २ ॥

सदूर्वासु चतसृषु शिलासु मणिकं प्रतिष्ठापयेत्. पृथिव्या अधि सम्भवेति ॥ ३ ॥

चतस्रः शिलाः स्थापयित्वा तासु दूर्वा निधाय ततो मणिकं प्रतिष्ठापयेत् मन्त्रेण। मणिको नाम जलधारणार्थो भाण्डविशेषः ॥ ३ ॥

अरङ्गरो वावदीति त्रेधा बद्धो वरत्रया। इरामु ह प्रशंसत्यनिरामपबाधतामिति वा ॥ ४ ॥

अनया वा प्रतिष्ठापयेत् ॥ ४ ॥

अथास्मिन्नप आसेचयेत्. एतु राजा वरुणो रेवतीभिरस्मिन् स्थाने तिष्ठतु मोदमानः। इरां वहन्तो घृतमुक्षमाणा मित्रेण साकं सह संविशन्त्विति ॥ ५ ॥

अथ मणिके अपो निषिञ्चति पूरणार्थं मन्त्रेण ॥ ५ ॥

अथैनच्छमयति ॥ ६ ॥

एतदास्तु शान्तं करोति। कथं. इत्यमित्याह ॥ ६ ॥

व्रीहियवमतीभिरद्भिर्हिरण्यमवधाय शन्तातीयेन त्रिः प्रदक्षिणं परिव्रजन् प्रोक्षति ॥ ७ ॥

अप्सु हिरण्यमवधाय ताभिः प्रोक्षति ॥ ७ ॥

**अविच्छिन्नया चोदकधारया. आपो हि ष्ठा मयोभुव इति तृचेन ॥ ८ ॥**

उक्तार्थे द्वे सूत्रे ॥ ८ ॥

**मध्येऽगारस्य स्थालीपाकं श्रपयित्वा. वास्तोष्पते प्रतिजानीह्यस्मानिति चतसृभिः प्रत्यृचं हुत्वाऽन्नं संस्कृत्य ब्राह्मणान् भोजयित्वा. शिवं वास्तु शिवं वास्त्विति वाचयीत ॥ ९ ॥　　॥ ९ ॥**

श्रपयित्वेतिवचनं अस्मात् स्थालीपाकात् प्रागस्मिन् गृहे पाकान्तरं न श्रपयितव्यमित्येवमर्थं । भुक्तवतो ब्राह्मणान् शिवं वास्तु शिवं वास्त्विति भवन्तो ब्रुवन्त्विति वाचयीत । ते च तं शिवं वास्तु शिवं वास्त्विति प्रत्यूचुः । उक्तार्थमन्यत् ॥ ९ ॥

अथ द्वितीये नवमी कण्डिका ।

**उक्तं गृहप्रपदनं ॥ १ ॥**

यदुक्तं गृहप्रपदनं प्रपद्येत गृहानहं सुमनस इत्यादि तदिदानीमिहापि कार्यमित्यर्थः । अन्ये तु प्राहुः यदुक्तं मणिकप्रतिष्ठा-

पनादि शिवं वास्त्वित्यन्तं तद्गृहप्रपदनसंज्ञं भवति। किं सिद्धं भवति. मणिकस्थापनात् प्रागेव बीजानि स्थापयित्वा तूष्णीं प्रविशेदिति। अपिच शास्त्रान्तरेण संस्कृतं विशीर्णं वा पुराणं गृहं संस्कृत्य प्रविशतो मणिकप्रतिष्ठापनादि सिध्यति॥ १ ॥

## बीजवतो गृहान् प्रपद्येत ॥ २ ॥

गृहानिति बहुवचनं आप इतिवत्। बीजवतः प्रपद्येतेत्येतावतैव सिद्धे गृहानिति वचनं यत्र गृहं प्रविशति शास्त्रान्तरसंस्कृतं विशीर्णं वा संस्कृत्य तत्रापि एवं प्रविशेदिति मणिकादि बीजवत्प्रपदनान्तं तत्रापि कुर्यादित्यर्थः। तेन पूर्वव्याख्यापि साध्वी॥ २ ॥

## क्षेत्रं प्रकर्षयेदुत्तरैः प्रोष्ठपदैः फाल्गुनीभी रोहिण्या वा ॥ ३ ॥

फाल्गुनीभिरित्यत्रापि उत्तराभिरित्येवं सम्बध्यते। तेन त्रीणि नक्षत्राणि। नित्यकर्मणां द्रव्यसाध्यत्वात् द्रव्यार्थं क्षेत्रं प्रकर्षयेत्। णिचप्रयोगः स्वयंकृषिनिवृत्त्यर्थः। तथा चानापदि गौतमः 'कृषिवाणिज्ये वा स्वयं कृते' इति। मनुरपि। [अ० ४।४।]

'ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन वा' इति।

[मनु० अ० ४।५।] 'प्रमृतं कर्षणं स्मृतम्' इति। अक्षसूक्ते चेयमेव वृत्तिरुक्ता. 'अक्षैर्मा दीव्य कृषिमित् कृषस्व' इति। प्रतिग्रहादयस्त्वापत्कल्पाः। त्रिषु नक्षत्रेषु कृषिं प्रारभेत। इदं च प्रारम्भदिवसे कुर्यादित्याह॥ ३ ॥

क्षेत्रस्यानुवातं. क्षेत्रस्य पतिना वयमिति प्रत्यृचं जुहुयाज्जपेद्वा ॥ ४ ॥

क्षेत्रस्यानुवातं देशं गत्वा तत्रोपलेपनादि कृत्वा जुहुयात् जपेद्वेदं सूक्तं तत्रस्थ एव। पादग्रहणेऽपि सामर्थ्यात् सूक्तग्रहणं। प्रत्यृचमिति व्याख्यातं ॥ ४ ॥

गाः प्रतिष्ठमाना अनुमन्त्रयेत. मयोभूर्वातो अभि वा तूस्रा इति द्वाभ्याम् ॥ ५ ॥

भक्षणार्थमरण्यं प्रति गच्छन्तीर्गा अनुमन्त्रयेताहरहः आत्मीया अन्या वा. न नियमः ॥ ५ ॥

आयतीः. यासामूधश्चतुर्बिलं मधोः पूर्णं घृतस्य च। ता नः सन्तु पयस्वतीर्बह्वीर्गोष्ठे घृताच्यः। उप मैतु मयोभुव ऊर्जं चौजश्च बिभ्रतीः। दुहाना अक्षितं पयो मयि गोष्ठे निविशध्वं। यथा भवाम्युत्तमो या देवेषु तन्वामैरयन्तेति च सूक्तशेषं ॥ ६ ॥

भक्षयित्वा ग्राममं प्रत्यागच्छन्तीर्गा अनुमन्त्रयेताहरहः याभ्यामिमृग्भ्यां. सूक्तशेषेण च ॥ ६ ॥

आगावीयमेके ॥ ७ ॥

आयतीनामनुमन्त्रणे 'आ गावो अग्मन्' इत्येतत्सूक्तमेके इच्छन्ति. पूर्वासां बाधः ॥ ७ ॥

**गणानासामुपतिष्ठेतागुरुगवीनां. भूताः स्थ प्रशस्ताः शोभनाः प्रियाः प्रियो वो भूयासं शं मयि जानीध्वं शं मयि जानीध्वं ॥ ८ ॥ ॥ १० ॥**

आसाङ्गवां अगुरुगवीनां गणानुपतिष्ठेताहरहः भूताः स्थेति। गुरोर्गावस्तासु तिष्ठन्ति चेन्नोपतिष्ठेत। सर्वत्र स्थित्वैवोपस्थेयं नोपविश्य। तथाचोक्तं। 'उपस्थानन्तदेव स्यात् प्रणतिस्थानसंयुतम्' इति। शम्मयि जानीध्वमिति सकृदेव वक्तव्यं। अध्यायपरिसमाप्तिलक्षणार्थं हि द्विर्वचनं ॥ ८ ॥

इति द्वितीये दशमी कण्डिका ॥ ०॥

इत्याश्वलायनगृह्यसूत्रविवरणे नारायणीयायां वृत्तौ द्वितीयोऽध्यायः।

---

॥ ॐ ॥

अथातः पञ्चयज्ञाः ॥ १ ॥

उक्तोऽर्थः। अत शब्दो हेत्वर्थः। यस्मादेतैर्महतो निश्रेयसस्यावाप्तिस्तस्मात् पञ्चयज्ञा नाम यज्ञा वच्यन्त इत्यर्थः। इमे त इत्याह ॥ १ ॥

देवयज्ञो भूतयज्ञः पितृयज्ञो ब्रह्मयज्ञो मनुष्ययज्ञ इति ॥ २ ॥

तेषां स्वरूपमाह ॥ २ ॥

तद्यदग्नौ जुहोति स देवयज्ञो यद्बलिङ्करोति स भूतयज्ञो यत् पितृभ्यो ददाति स पितृयज्ञो यत् स्वाध्यायमधीयते स ब्रह्मयज्ञो यन्मनुष्येभ्यो ददाति स मनुष्ययज्ञ इति ॥ ३ ॥

वैश्वदेवे त्रयो यज्ञाः उक्ताः. तत्र यदग्नौ जुहोति दशाहुतीः स देवयज्ञः। यद्बलिङ्करोति 'अथ बलिहरणम्' [गृ० सू० १.२.३] इति स भूतयज्ञः। यत् पितृभ्यो ददाति 'स्वधा पितृभ्यः' [गृ० सू० १.२.११] इति स पितृयज्ञः। यत् स्वाध्यायमधीते 'अथ स्वाध्यायविधिः' [गृ० ३.२.१] इत्यनेन विधानेन स ब्रह्मयज्ञः।

यत् मनुष्येभ्यो ददाति 'ततोऽतिथीन् भोजयेत्' इति स्मृतिविधानेन स मनुष्ययज्ञः। अपूर्वाणां विधाने सति तद्यद्ग्नौ जुहोतीति सिद्धवदुपदेशो नोपपद्येत. अग्नौ जुहुयादित्येवावक्ष्यत्। अथ शाखान्तरसिद्धानामनुवादः. तर्ह्यथ स्वाध्यायविधिरिति ब्रह्मयज्ञविधानमपार्थकं स्यात्. तस्यापि तत्र सिद्धत्वात्। अथ इहतन्त्रपरिग्रहार्थो ब्रह्मयज्ञोपदेशो न तद्युक्तं. तन्त्रभेदस्यासिद्धत्वात्। पञ्चयज्ञानां हि तैत्तिरीयारण्यकं मूलं। 'पञ्च वा एते महायज्ञाः' इत्यादि। तन्मूलत्वे च सति कथन्तन्त्रभेदसम्भवः। तस्माद्वैश्वदेवादय एव पञ्चयज्ञा इति सिद्धं। मनुनाप्येवमेवोक्तं पितृयज्ञवर्जं। पितृयज्ञं त्वन्यथोक्तवान्।

'एकमप्याशयेद्विप्रं पित्रर्थं पाञ्चयज्ञिके।

न चैवात्राशयेत् कञ्चिद्वैश्वदेवं प्रति द्विजं॥

कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा।

पयोमूलफलैर्वापि पितृभ्यः प्रीतिमावहन्' [मनु० ३.८३। ८२।] इति॥ ३॥

## तानेतान्यज्ञानहरहः कुर्वीत॥ ४॥ ॥ १॥

अस्येदं प्रयोजनं। भोजनार्थात् पाकात् प्रवृत्तिर्वैश्वदेवस्योक्ता। यस्याग्नौ न क्रियते न तद्भोक्तव्यमिति निषेधात्. अत एव चान्नसंस्कारार्थं. तत्र यदा परान्नं भुङ्क्ते उपवसति वा तदा संस्कार्यस्य पाकस्याभावात् संस्कारस्य कर्मणोऽप्यभावः स्यात्. तन्निवृत्त्यर्थमिदं। तेन पञ्चयज्ञार्थं सर्वथा पक्तव्यमेवेति सिद्धं। अनेनाभ्युपायेन वैश्वदेवमपूर्वार्थमपीति साधितं भवति। अपि च सर्वथा पाकासम्भ-

वै पुष्पैः फलैरद्भिर्वा कुर्यादित्येवमर्थञ्च । उक्तञ्च 'आपन्नमपि दातव्यं आकाष्ठमपि जुहुयात् आच्छत्रमपि ब्रह्मयज्ञं कुर्यात्' इति ।

'न चेदुत्पद्यतेऽन्नं तु अद्भिरेतान् समापयेत्' इति च ।

अकरणे प्रायश्चित्तार्थं च । उक्तञ्च बौधायनेन ।

'एतेभ्यः पञ्चयज्ञेभ्यो यद्येकोऽपि विहीयते ।
मनस्त्वत्याहुतिस्तत्र प्रायश्चित्तं विधीयते ॥
द्व्यहं वापि त्र्यहं वापि प्रमादादकृतेषु तु ।
तिस्रस्तन्तुमतीर्हुत्वा चतस्रो वारुणीर्जपेत् ॥
दशाहं द्वादशाहं वा विनिवृत्तेषु सर्वतः ।
चतस्रो वारुणीर्हुत्वा कार्यस्तन्तुमतश्चरुः' ॥ इति ।

केचिदाशौचदिवसेष्वपि वैश्वदेवं कार्यमित्येवमर्थमिति व्याचख्युः । तदयुक्तं. 'पञ्चयज्ञविधानन्तु न कुर्यान्मृतजन्मनोः' इति । निषेधात् ॥ ४ ॥

इति तृतीये प्रथमा कण्डिका ॥ ० ॥

## अथ स्वाध्यायविधिः ॥ १ ॥

उक्तोऽर्थः । विधिग्रहणं विधिरेव वक्ष्यते न क्रम इत्येवमर्थं । तेन वैश्वदेवस्य पुरस्तादुपरिष्टाद्वाऽध्येतव्यं न क्रमनियम इति सिद्धं ॥ १ ॥

प्राग्वोदग्वा ग्रामान्निष्क्रम्याप आप्लुत्य शुचौ देशे यज्ञोपवीत्याचम्याक्लिन्नवासा दर्भाणां महदुपस्तीर्य प्राक्कूलानान्तेषु प्राङ्मुख उपविश्योपस्थं कृत्वा दक्षिणोत्तरौ पाणी सन्धाय पवित्रवन्तौ विज्ञायते. अपां वा एष ओषधीनां रसो यद्दर्भाः सरसमेव तद्ब्रह्म करोति द्यावापृथिव्योः सन्धिमीक्षमाणः संमील्य वा यथा वा युक्तमात्मानं मन्येत तथा युक्तोऽधीयीत स्वाध्यायं ॥ २ ॥

वाशब्दद्वयमन्यस्यां वाऽनिन्दितायान्दिशि कार्यमित्येवमर्थं. बहिरसम्भवे ग्रामेऽध्येतव्यमित्येवमर्थं च। तथाच श्रुतिः। 'ग्रामे मनसा स्वाध्यायमधीयीत्' इति। आप्लुत्येति स्नात्वेत्यर्थः। आ इतिवचनं अपो वगाह्य स्नायादित्येवमर्थं। शुचौ देशे इतिवचनं शुचौ देशे यत्र क्वाप्यधीयीत न तीर्थनियम इत्येवमर्थं। यज्ञोपवीतिग्रहणं नियमेनात्र यज्ञोपवीती स्यादित्येवमर्थं। तेन दहनकर्मणि प्राचीनावीतित्वं सिद्धं। आचम्येतिवचनङ्कर्माङ्गाचमनविधानार्थं। अक्लिन्नवासा इति अनार्द्रवासा भवेदित्यर्थः। ततः प्राक्कूलानां दर्भाणां महदुपस्तीर्य तेषु प्राङ्मुख उपविश्योपस्थं कृत्वा दक्षिणोत्तरौ पाणी पवित्रवन्तौ सन्धायेति। महदिति बह्वित्यर्थः। प्राक्कूलानां प्रागग्राणां इत्यर्थः। प्राङ्मुख इतिवचनन्नियमेनात्र प्राङ्मुखः स्यादित्येवमर्थं. तेनान्यत्र क्वचिदुदङ्मुखताऽपि सिद्धा। दक्षिणोत्तरेणोपस्थं कुर्यात्. अपेक्षकत्वात्। दक्षिण उत्तरो ययोः पाण्योस्तौ

दक्षिणोत्तरौ पाणी। पवित्रे व्याख्याते। सव्यं पाणिं प्रागङ्गुलिमुत्तानं विधाय तस्मिन् प्रागग्रे पवित्रे निधाय दक्षिणं पाणिं न्यञ्चं प्रागङ्गुलिं तेन सन्दध्यादित्यर्थः। विज्ञायते श्रूयत इत्यर्थः। श्रुत्याकर्षः सर्वमिदं गृह्यशास्त्रं श्रुतिमूलमिति दर्शयितुं। द्यावापृथिव्योः सन्निमीक्षमाण इति नोर्ध्वमधस्तिर्य्यग्वेक्षेतेत्यर्थः। सम्मील्य वाऽक्षिणी। अन्येन वा येन प्रकारेणात्मानं समाहितमनसं मन्येत तथा युक्तोऽधीयीत. न सन्नीक्षणसम्मीलननियमः। स्वाध्यायवचनं सावित्र्या अपि स्वाध्यायधर्मसिद्ध्यर्थं। तेन 'सावित्रीमन्वाह' [गृ०सू० ३.२.४] इति सावित्र्या अनुवचने सत्यपि सामिधेनीधर्म ऐकश्रुत्यं ऋगन्ते च प्रणवो न भवतीति सिद्धम्॥ २॥

ॐपूर्वा व्याहृतीः॥ ३॥

प्रणवमादौ सकृदुक्त्वा ततस्तिस्रो व्याहृतीः समस्ता ब्रूयात्। प्रतिव्याहृति प्रणवशङ्का नैव कार्या. सकृदुक्तेनैव प्रणवेन ॐपूर्वत्वसिद्धेः। यथा 'अध्वर्युमुखाः' इत्यत्र एकेनैवाध्वर्युणा सर्वेऽध्वर्युमुखा भवन्ति तद्वदत्रापि. पृथक् कल्पनायां प्रमाणाभावाच्च। ननु कतमस्यां सूत्रे व्याहृतिसंज्ञा कृता। सत्यं कृता. होमे तु सा न सर्वत्र। तेनात्र तिसृणामिति सिद्धं। 'भूर्भुवः स्वरित्येता वाव व्याहृतयः' इति श्रुतिः। अपि च तैत्तिरीयश्रुतिरेषां मूलमित्युक्तं। तत्र च एवं श्रूयते। 'ॐमिति प्रतिपद्य भूर्भुवः सुवरित्याह। सावित्रीं गायत्रीं त्रिरन्वाह। पच्छोऽर्द्धर्चशोऽनवानं। स्वाध्यायमधीयीत। नमो ब्रह्मण इति परिधानीयां त्रिरन्वाह' इति। तस्माद्यदुक्तं तत्सम्यक्॥ ३॥

सावित्रीमन्वाह पच्छोऽर्धर्चशः सर्वामिति तृतीयं ॥ ४ ॥ ॥ २ ॥

सर्वामिति अनवानमित्यर्थः । तृतीयवचनमुपकरणेऽपि पच्छोऽर्धर्चशोऽनवानमित्येवं त्रिर्ब्रूयादित्येवमर्थम् ॥ ४ ॥

इति तृतीये द्वितीया कण्डिका ॥ ० ॥

---

अथ स्वाध्यायमधीयीत ऋचो यजूंषि सामान्यथर्वाङ्गिरसो ब्राह्मणानि कल्पान् गाथा नाराशंसीरितिहासपुराणानीति ॥ १ ॥

अथशब्दः पूर्वेण सम्बन्धार्थः । तेन प्रणवादित्रयं स्वाध्यायस्याङ्गमिति सिद्धं । स्वाध्यायवचनं ऋगादिरेव स्वाध्यायो न प्रणवादित्रयमित्येवमर्थम् । तेन ऋचमपि ब्रह्मयज्ञं कुर्यादित्यस्मिन् पक्षे सावित्रीपर्यन्तमुक्त्वा ऋचमधीयीत. ततो नम इत्येतया परिदध्यात् । तेन प्रणवादित्रयस्य परिधानीयायाश्च नित्यत्वं साधितं भवति । अधीयीतेतिवचनमन्वाहाधिकारनिवृत्त्यर्थम्. तेनानुप्रवचनधर्मो न भवति । सूत्राण्येव कल्पा इत्युच्यन्ते । नन्वनित्यानां सूत्राणां नित्यश्रुत्या उपदेशो न घटते । नन्वनित्यस्य पशोः पशुना यजेतेति वि-

धिर्न घटते। अथ तत्राकृतेर्नित्यत्वादुपपद्यते तदत्राप्यविशिष्टं। सर्वकल्पेषु कल्पत्वं नामानुवृत्तन्नित्यमस्ति। गाथा नाम ऋग्विशेषाः. इन्द्रगाथादयः। 'यदिन्द्रादौ दाशराज्ञे' इति इन्द्रगाथाः पञ्चर्चः। नाराशंस्यश्च ऋच एव 'इदं जना उपश्रुत' इत्यादयः। ऋक्त्वादेव सिद्धे पुनर्वचनं फलविशेषसिद्ध्यर्थम्। इतिहासं महाभारतमाहुः। यत्र सृष्टिस्थित्युत्पत्तिप्रलयाः कथ्यन्ते तत्पुराणम्। अनित्यचोद्यं पूर्ववत्। इह हि द्रव्योत्सर्गनिमित्तं फलं दृष्टं। अतः स्वाध्यायमात्रेणापि फलमस्तीति श्रुतिमुपन्यस्यति॥ १ ॥

यदृचोऽधीते पयआहुतिभिरेव तद्देवतास्तर्पयति. यद्यजूंषि घृताहुतिभिः. यत्सामानि मध्वाहुतिभिः. यदथर्वाङ्गिरसः सोमाहुतिभिः. यद्ब्राह्मणानि कल्पान् गाथा नाराशंसीरितिहासपुराणानीत्यमृताहुतिभिः ॥२ ॥

ब्रह्मयज्ञाध्ययनेन देवतास्तृप्यन्तीत्युक्तं. पितरश्च तृप्यन्तीत्याह ॥२॥

यदृचोऽधीते पयसः कुल्या अस्य पितॄन्त्स्वधा उपक्षरन्ति. यद्यजूंषि घृतस्य कुल्याः. यत्सामानि मध्वः कुल्याः. यदथर्वाङ्गिरसः सोमस्य कुल्याः. यद्ब्राह्मणानि कल्पान् गाथा नाराशंसीरितिहासपुराणानीत्यमृतस्य कुल्याः ॥ ३ ॥

स्वधेति पितृणामन्नमुच्यते। पयसो नद्यः स्वधाभूताः पितॄनु-पतिष्ठन्तीत्यर्थः। एवमुत्तरत्रापि नेयम् ॥ ३ ॥

स यावन्मन्येत तावदधीत्यैतया परिदधाति. नमो ब्रह्मणे नमोऽस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः। नमो वाचे नमो वाचस्पतये नमो विष्णवे महते करोमीति ॥ ४ ॥ ॥ ३ ॥

ऋगादिदशकमध्येतव्यमित्युक्तं. तत्र नियमेन दशानामध्ययने प्राप्ते इदमुच्यते। स यावत् कालमेकाग्रमनसा आत्मानं मन्येतैतावत्कालमेवाधीयीत न दशाप्यध्येतव्या इति नियमः। सर्वथा समाहितमनसैवाध्येतव्यम्. नेयत्तानियम इत्यर्थः। एतयेतिवचनमदैतया परिदध्यादित्येवमर्थम्. तेनास्यापि नित्यत्वं सिद्धं। एषापि त्रिराच्या. प्रथमायां दृष्टत्वाच्छ्रुतिदर्शनाच्च ॥ ४ ॥

इति तृतीये तृतीया कण्डिका ॥ ० ॥

देवतास्तर्पयति. प्रजापतिर्ब्रह्मा वेदा देवा ऋषयः सर्वाणि छन्दांस्योङ्कारो वषट्कारो व्याहृतयः सावित्री यज्ञा द्यावापृथिवी अन्तरिक्षमहोरात्राणि संख्याः सिद्धाः समुद्रा नद्यो गिरयः क्षेत्रौषधिवनस्पतिगन्धर्वाप्सरसो नागा वयांसि गावः साध्या विप्रा यक्षा रक्षांसि भूतान्येवमन्तानि ॥ १ ॥

परिधानानन्तरं एता देवतास्तर्पयत्युदकेन. तर्पणे तस्य प्रसिद्धत्वात्। प्रजापतिरित्यारभ्य एकान्नत्रिंशद्वाक्येषु तृप्यतु तृप्येतां तृप्यन्त्विति यथार्थमुक्त्वा तर्पयेत्। एवमन्तानीति पृथङ्मन्त्र एव॥ ॥ १ ॥

अथ ऋषयः शतर्चिनो माध्यमा गृत्समदो विश्वामित्रो वामदेवोऽत्रिर्भरद्वाजो वसिष्ठः प्रगाथाः पावमान्यः क्षुद्रसूक्ता महासूक्ता इति ॥ २ ॥

अनन्तरं शतर्चिप्रभृतीन् द्वादश ऋषींस्तर्पयति। प्रत्यृषि वाक्यभेदः पूर्ववत्। ऋषिग्रहणं निवीतिप्राप्त्यर्थम्। 'यज्ञोपवीतशौचे च' [आ०श्रौ० १.१.१०] इत्यनेन निवर्त्तितत्वात्। तीर्थविशेषस्तु स्मृतित एव सिद्धः॥ २ ॥

प्राचीनावीती ॥ ३ ॥

प्राचीनावीती भूत्वा वक्ष्यमाणांस्तर्पयति। अयमपि प्रतिप्रसव एव॥ ३ ॥

सुमन्तुजैमिनिवैशम्पायनपैलसूत्रभाष्यभारतमहाभारतधर्माचार्या जानन्ति बाहविगार्ग्यगौतमशाकल्यबाभ्रव्यमाण्डव्यमाण्डकेया गार्गी वाचक्नवी वडवा प्राचीथेयी सुलभा मैत्रेयी. कहोलं कौषीतकं पैङ्ग्यं महापैङ्ग्यं सुयज्ञं शाङ्खायनमैतरेयं महैतरेयं शाकलं बाष्कलं सुजातवक्त्रमौदवाहिं महौदवाहिं सौजामिं शौनकमाश्वलायनं ये चान्ये आचार्यास्ते सर्वे तृप्यन्त्विति ॥ ४ ॥

त्रयोविंशति वाक्यानि. तत्र कहोलादिषु अर्थात् तर्पयामिशब्दः कार्यः । सर्वत्र प्रतिवाक्यं तर्पणङ्कुर्यात्. एकमन्त्राणि कर्माणीति न्यायात् ॥ ४ ॥

प्रतिपुरुषं पितृंस्तर्पयित्वा गृहानेत्य यद्ददाति सा दक्षिणा ॥ ५ ॥

पितरं पितामहं प्रपितामहं च तर्पयित्वा गृहानेत्य यद्ददाति अतिथिभोजनभिक्षादानादि सा ब्रह्मयज्ञस्य दक्षिणा भवति । यद्ददातीति सिद्धवदुपदेशान्नापूर्वं विधीयत इति गम्यते । अपूर्वविधौ तु गृहानेत्य दद्यादित्यवक्ष्यत् । सदक्षिणत्वं ब्रुवता सोमयागसाम्यं प्रदर्शितं प्रशंसार्थं । *'क्रतुना तेनास्येष्टं' इत्यादि प्रशंसा श्रूयते ।

---

* क्रतुना तेनास्येष्टमित्यस्य स्थाने 'उत्तरत्र च सेषो हविर्धानं' इति सं॰ पु॰ पाठो वर्त्तते ।

प्रतिपुरुषवचनं पृथक् पृथक् तर्पयेत् इत्येवमर्थम्। पूर्वोक्तोपवेशनासम्भवेऽपि एवं वा ब्रह्मयज्ञं कुर्यादिति श्रुतिमेवाह ॥ ५ ॥

अथापि ज्ञायते. स यदि तिष्ठन् व्रजन्नासीनः शयानो वा यं यं क्रतुमधीते तेन तेन हास्य क्रतुनेष्टम्भवतीति ॥ ६ ॥*

'न शयानोऽधीयीत नाष्टम्यां' इत्यादिनिषेधो नित्यस्वाध्यायस्यैव न ब्रह्मयज्ञस्येति श्रुतिमेवाह ॥ ६ ॥

विज्ञायते. तस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देशः। ॥ ७ ॥　　　　॥ ४ ॥

तस्य ब्रह्मयज्ञस्य द्वावेवानध्यायौ यदात्माऽशुचिः सूतकेन मृतकेन वा मलादिना वा। यदा च देशोऽशुचिः अमेध्यादिना तत्रोभयत्रैवेत्यर्थः। कालस्त्वस्य श्रौतो श्रूयते। 'मध्यन्दिने प्रबलमधीयीत य एवं विद्वान्महारात्र उषस्युदिते च' इति ॥ ७ ॥

इति तृतीये चतुर्थी कण्डिका ॥०॥

---

अथातोऽध्यायोपाकरणं ॥ १ ॥

अध्ययनमध्यायस्तस्योपाकरणं प्रारम्भो येन कर्मणा तदध्यायोपाकरणं। उक्तोऽर्थः। अतःशब्दो हेत्वर्थः। यस्माद्ब्रह्मयज्ञो नित्यः अतोऽध्यायोपाकरणं ब्रूम इति। तस्य कालमाह ॥ १ ॥

* एतत्सूत्रं मू॰ पु॰ नास्ति पतितमनुमीयते।

# ओषधीनां प्रादुर्भावे श्रवणेन श्रावणस्य ॥ २ ॥

ओषधीनां प्रादुर्भावे सति श्रावणमासस्य श्रवणेन कर्त्तव्यं। ओषधीनां प्रादुर्भाव इतिवचनं यदा श्रावणे प्रादुर्भावो न स्यात् तदा भाद्रपदे श्रवणेन कर्त्तव्यमित्येवमर्थम्। वृष्ट्यपकर्षे कर्मापकर्षशङ्का नैवास्ति। यदा भाद्रपदादुत्कर्षो भवति तदापि कर्मोत्कर्षशङ्का नैव कार्या। वार्षिकमिति समाख्याबलात् वर्षासु क्रियत इति वार्षिकं। श्रावणभाद्रपदमासौ हि न वर्षाऋतुः। श्रावणे प्रादुर्भावाभावे कर्माकरणशङ्काप्यनेनैव निरस्ता। श्रवणेनेति श्रवणेन युक्ते काले इत्यर्थः। नक्षत्रेण युक्तः कालः [पा० ४.२.३] इत्यनेनाण्। 'लुबविशेषे' [पा० ४.२.४] इति तस्य लुप्। 'नक्षत्रे च लुपि' [पा० २.३.४५] इति सप्तम्यर्थे तृतीया। नक्षत्रशब्देषु सर्वत्रैवं योज्यं॥ २ ॥

# पञ्चम्यां हस्तेन वा ॥ ३ ॥

अत्रापि श्रावणस्येति सम्बध्यते. मध्यगतस्य विशेषाभावात्. प्रयोजनवत्त्वाच्च। श्रावणमासस्य पञ्चमी यदा हस्तेन युज्यते तदा वेत्यर्थः। इति कालत्रयमुक्तं॥ ३ ॥

# आज्यभागौ हुत्वाऽऽज्याहुतीर्जुहुयात् सावित्र्यै ब्रह्मणे श्रद्धायै मेधायै प्रज्ञायै धारणायै सदसस्पतयेऽनुमतये छन्दोभ्य ऋषिभ्यश्चेति ॥ ४ ॥

आज्यभागवचनं नित्यार्थं। द्रव्यानादेशादेवाज्ये सिद्धे आ-

त्र्याहुतिवचनं उत्सर्जनेऽप्येतान् वाज्येनैव जुहुयात् नान्नेनेत्येवमर्थम्. परिस्तरणविकल्पस्यासम्भवात् ॥ ४ ॥

अथ दधिसक्तून् जुहोति ॥ ५ ॥

दधिमिश्रान् सक्तूनित्यर्थः। मन्त्रानाह ॥ ५ ॥

अग्निमीडे पुरोहितमित्येका ॥ ६ ॥

एकाग्रहणं कुषुम्भकादिवत् तृचनिवृत्त्यर्थम्॥ ६ ॥

कुषुम्भकस्तदब्रवीत्. आवदंस्त्वं शकुने भद्रमावद. गृणाना जमदग्निना. धामन्ते विश्वम्भुवनमधिश्रितं. गन्ता नो यज्ञं यज्ञियाः. सुशमियो न स्वो अरणः प्रचक्ष्व. विचक्ष्वाग्ने याहि मरुत्सखायते. राजन्स्तत् हविरिति तृचाः ॥ ७ ॥

एते नव तृचाः॥ ७ ॥

समानीव आकूतिरित्येका ॥ ८ ॥

एकाग्रहणं तृचानन्तरमियमेवैका न वक्ष्यमाणेत्येवमर्थम् ॥ ८ ॥

तच्छंयोरावृणीमह इत्येका ॥ ९ ॥

अत्र चैकाग्रहणं तृचानन्तरमियमेवैका न पूर्वेत्येवमर्थम्।

एवमनयोर्विकल्पः। शाकलसमाम्नायस्य बाष्कलसमाम्नायस्य चेद-मेव सूत्रं गृह्यस्येत्यध्येतृप्रसिद्धं। तत्र शाकलानां 'समानीव आकूतिः' इत्येषा भवति. संहितान्त्यत्वात्। बाष्कलानान्तु 'तच्छंयो-रावृणीमहे' इत्येषा भवति।. संहितान्त्यत्वादित्येवं विनियोगो युक्तः ॥ ९ ॥

अध्येष्यमाणोऽध्याप्यैरन्वारब्ध एताभ्यो देवताभ्यो हुत्वा सौविष्टकृतं हुत्वा दधिसक्तून् प्राश्य ततो मार्जनम् ॥ १० ॥

अध्यापयितव्यैरित्यर्थः। अध्याप्यैरन्वारब्ध इत्येतावतैव सिद्धे अध्येष्यमाण इतिवचनमध्याप्याभावेऽप्यध्येष्यमाणः स्वयमेव कुर्यादि-त्येवमर्थम्। 'वर्षासु च्छन्दांस्युपाकृत्याधीयीरन्' इति श्रुतेः। पञ्च-म्यां हस्तेन वाऽध्येष्यमाणोऽध्याप्यैरन्वारब्ध आज्यभागौ हुत्वाऽऽज्या-हुतीर्जुहुयादित्येवं वक्तव्ये. एताभ्यो देवताभ्यो हुत्वेति वचनं सावि-त्र्यादिनवानामग्निमीड़आदिविंशतीनाञ्च देवताग्रहणेन ग्रहणा-र्थम्। क। एताभ्यो देवताभ्योऽन्नेन हुत्वा एता एव देवता इत्यत्र च। स्विष्टकृद्वचनं व्याख्यातं प्राक्। दधिसक्तुवचनं आज्यनिवृत्त्य-र्थम्। परिस्तरणैरञ्जलिमन्तर्धायाप आसेचयते तन्मार्जनं। प्राशना-दि वेदारम्भणान्तं शिष्याणामपि कार्यं॥ १० ॥

अपरेणाग्निं प्राक्कूलेषु दर्भेषूपविश्योदपात्रे दर्भा-न् कृत्वा ब्रह्माञ्जलिकृतो जपेत् ॥ ११ ॥

पश्चादग्नेः प्रागग्रेषु दर्भेषु उपविशन्ति। ततः शरावादौ उदकमासिच्य तत्र दर्भान् निदध्यात्। ततो ब्रह्माञ्जलिकृतो जपेत् स्वयं शिष्यैः सह सन्ति चेत्। जपतिचोदनायां गृह्यकर्मणि अनित्यमुपांशुत्वमिति ज्ञापयिष्यामः। तस्मादुच्चैरेव जपेत्। अध्यापनविरोधाच्च ॥ ११ ॥

## ॐपूर्वा व्याहृतीः सावित्रीं च त्रिरभ्यस्य वेदादिमारभेत् ॥ १२ ॥

पूर्वमोङ्कारं। ततस्तिस्रो व्याहृतीः समस्ताः। ततः सावित्रीम्। एवमेतत्त्रितयन्त्रिरभ्यस्य वेदादिमग्निमीड़ इत्यारभ्य सूक्तमनुवाकं वारभेत। चशब्दः प्रणवव्याहृतीनामप्यभ्यासार्थः। अथ सर्वप्रायश्चित्तादि समापयेत्॥ १२ ॥

## तथोत्सर्गे ॥ १३ ॥

अत्र एतेनेत्यभावात् न कृत्स्नकर्मातिदेशः। वेदारम्भणमात्रमतिदिश्यते। एताभ्यो देवताभ्योऽन्नेन हुत्वेति च प्रधानहोमः। तेन प्राशनमार्जने उत्सर्जने न भवत इति सिद्धं ॥ १३ ॥

## षण्मासानधीयीत ॥ १४ ॥

इदं वचनमुपाकृत्य नियमेन षण्मासानधीयीत नोपरमेदित्येवमर्थं ॥ १४ ॥

## समावृत्तो ब्रह्मचारिकल्पेन ॥ १५ ॥

ब्रह्मचारिधर्मैरित्यर्थः। स्वाध्यायकाले ये विहिता धर्मा मधुमांसस्त्रीगमनखट्वादिवाशयनादिवर्जनादयः तैर्युक्तोऽधीयीत। समावृत्तस्य मेखलादयस्तु न भवन्ति. अस्वाध्यायधर्मत्वात्॥ १५ ॥

## यथान्यायमितरे॥ १६ ॥

ब्रह्मचारिण इत्यर्थः। अस्मिन्नध्ययने ब्रह्मचारिणामपि प्रवृत्त्यर्थमिदं। इतरथा समावृत्तानामेवेति शङ्का स्यात्॥ १६ ॥

## जायोपेयेत्येके ॥ १७ ॥

समावृत्तो जायाङ्गच्छेदित्येके आहुः। ऋतावेव गच्छेन्नानृतावित्याह ॥ १७ ॥

## प्राजापत्यं तत् ॥ १८ ॥

तद्गमनं प्रजापतित्वसिद्ध्यर्थं कार्यम्। प्रजोत्पत्त्यर्थमित्यर्थः। तदर्थङ्कार्यं नानृतावित्यर्थः। ऋतुगमनं सर्वथा कार्यमिति तेषामभिप्रायः। अगमने दोषश्रवणात्।

'ऋतुस्नातान्तु यो भार्यां सन्निधौ नोपगच्छति।

घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः' [मनु०टी० ३.४५. पराशरः।] इति॥ १८॥

वार्षिकमित्येतदाचक्षते ॥ १९ ॥

एतदुपाकरणमित्यर्थः। आचक्षत इति ब्रुवन्वैदिकीयं संज्ञा न पारिभाषिकीति दर्शयति। अन्वर्थसंज्ञेयं दर्शितं प्राक्॥ १९ ॥

मध्यमाष्टकायामेताभ्यो देवताभ्योऽन्नेन हुत्वाऽपोऽभ्यवयन्ति ॥ २० ॥

मध्यमाष्टकाग्रहणं षण्मासान्तोपलक्षणार्थं। तेन तस्याः समीपे माघ्यां पौर्णमास्यामित्यर्थः। शास्त्रान्तरे चैवं दृश्यते। 'एताभ्यो देवताभ्यो हुत्वा सावित्र्यादिभ्य आज्यम्' इत्युक्तं। अग्निमीड इत्यादिभ्योऽन्नेन हुत्वा स्थालीपाकग्रहणमकृत्वाऽन्नेनेति यत्नेन ब्रुवन् गृहसिद्धमन्नं ग्राह्यमिति दर्शयति. ततः स्विष्टकृत्. ततो वेदारम्भणं। ततो होमशेषं समाप्यापो वगाहन्त इत्यर्थः॥ २० ॥

एता एव तद्देवतास्तर्पयन्ति ॥ २१ ॥

स्नात्वा सावित्र्याद्या नव अग्निमीड इत्याद्याश्च विंशतिं तर्पयन्तीत्यर्थः। ऋग्देवता आदिश्य तर्पयेयुः। द्वितीयान्तं कृत्वा तर्पयामीत्येकान्नत्रिंशद्वाक्यानि कृत्वा तावत्कृत्वस्तर्पयेयुः॥ २१ ॥

आचार्यान् ऋषीन् पितृंश्च ॥ २२ ॥

यच्च ब्रह्मयज्ञाङ्गं तर्पणमुक्तं तदेतदङ्गत्वेनेदानीमपि कार्यमित्य-

र्थः। चशब्दो देवतातर्पणसमुच्चयार्थः। तेन प्रजापत्याद्या अपि तर्प्याः। देवतास्तर्पयतीत्यत्र देवताग्रहणमत्रापि समुच्चयार्थं। क्रमश्च तन्त्रोक्त एव ॥ २२ ॥

## एतदुत्सर्जनं ॥ २३ ॥ ॥ ५ ॥

अस्येयं संज्ञा। ततः षण्मासान् षडङ्गान्यधीयीत। षण्मासानधीयीतेत्यारभ्य एवमन्ता धर्मा ग्रहणाध्ययन एवेत्याहुरेके। अन्ये त्वविशेषेणेत्याहुः ॥ २३ ॥

इति तृतीये पञ्चमी कण्डिका ॥ ०॥

---

## अथ काम्यानां स्थाने काम्याः ॥ १ ॥

त्रेतायां या इष्टयः पशवश्च 'आयुष्कामेष्ट्याम्' इत्याद्याः 'वायव्यं श्वेतमालभेत भूतिकामः' इत्याद्याश्च तेषां स्थाने काम्याः पाकयज्ञाः कार्या इत्यर्थः। काम्यसोमस्थाने सोमो न कार्यः। सोमतन्त्रस्य गृह्येऽविधानात्। तत्र द्रव्यमाह ॥ १ ॥

## चरवः ॥ २ ॥

त्रेतायां ये पुरोडाशाः तेषां स्थाने चरवः कार्याः। पशुस्थाने तु पशुरेव कार्यः। समानजातीयस्यैव हि बाधो भवति. ओषधिसाम्यात्. न पशोः। उक्तञ्च बोधायनेन। 'येऽमुत्र पुरोडाशास्त इह चरवः' इति। नामधेयेन होम इत्युक्तं॥ २ ॥

## तानेव कामानाप्नोति ॥ ३ ॥

अन्ये पाकयज्ञा आहिताग्नेरनाहिताग्नेश्च साधारणा इत्युक्तं। काम्यास्त्वनाहिताग्नेरेव भवन्तीत्येवमर्थमिदं वचनं। नैमित्तिकान्याह ॥ ३ ॥

## अथ व्याधितस्यातुरस्य यक्ष्मगृहीतस्य वा षडाहुतिश्चरुः ॥ ४ ॥

व्याधितो ज्वरादिगृहीतः। आतुरस्तन्मगः। यक्ष्मगृहीतः क्षयव्याधिगृहीतः। त्रिषु निमित्तेषु षडाहुतिर्नाम चरुः कार्यः। षडाहुतिरिति कर्मनाम। चरुग्रहणमाज्यनिवृत्त्यर्थम्॥ ४ ॥

## मुञ्चामि त्वा हविषा जीवनायकमित्येतेन ॥ ५ ॥

प्रत्यृचं पञ्चाहुतीर्हुत्वा स्विष्टकृतं षष्ठङ्कुर्यात्। अत्र हीनपादग्रहणमेव कथं न कृतं. षष्ठं एतेनेति च न वक्तव्यं भवति।उच्यते।

एतेनेत्यन्यसूक्तनिवृत्त्यर्थं। क। शौनकेनोक्तं 'रक्षोघ्नः षडाहुतिः' इति. तत्राप्यनेनैव सूक्तेन होतव्यमित्येवमर्थं। ऐतरेयिभिस्तु 'ब्रह्मणाग्निः' इत्यनेन षडाहुतिराम्नातः। तच्च सूक्तं रक्षोहलिङ्गं। तस्मात् प्राप्नुयात् तन्निवृत्त्यर्थमेतेनेतिवचनं। प्रत्यृचमेव पञ्च हुत्वा स्विष्टकृतं षष्ठं कुर्यात्। सूक्तमेवावर्त्य षडाहुतयो माभूवन्नित्येवमर्थं पादग्रहणम्॥ ५ ॥

**स्वप्नममनोज्ञं दृष्ट्वा. अद्या नो देव सवितरिति द्वाभ्यां. यच्च गोषु दुःस्वप्नमिति पञ्चभिरादित्यमुपतिष्ठेत॥ ६॥**

अशुभं स्वप्नं दृष्ट्वा द्वाभ्यां पञ्चभिश्चोपतिष्ठेत॥ ६ ॥

**यो मे राजन् युज्यो वा सखा वेति वा॥ ७॥**

अनयैव वा पूर्वाभिर्वा सप्तभिरिति विकल्पः॥ ७ ॥

**क्षुत्वा जृम्भित्वाऽमनोज्ञं दृष्ट्वा पापकं गन्धमाघ्रायाक्षिस्पन्दने कर्णध्वनने च. सुचक्षा अहमक्षीभ्यां भूयासं सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां मयि दक्षक्रतू इति जपेत्॥ ८॥**

अमनोज्ञं दृष्ट्वा अप्रियं प्रत्यक्षेण दृष्ट्वेत्यर्थः। षट्सु निमित्तेष्वेतां जपेत्॥ ८ ॥

अगमनीयां गत्वाऽयाज्यं याजयित्वाऽभोज्यं भुक्त्वा-ऽप्रतिग्राह्यं प्रतिगृह्य चैत्यं यूपं चोपहत्य. पुनर्मा मैत्विन्द्रियं पुनरायुः पुनर्भगः। पुनर्द्रविणमैतु मां पुनर्ब्राह्मणमैतु मां स्वाहा। इमे ये धिष्ण्यासो अग्नयो यथास्थानमिह कल्पतां। वैश्वानरो वावृधानोऽन्तर्यच्छतु मे मनो हृद्यन्तरममृतस्य केतुः स्वाहेत्याज्याहुतीर्जुहुयात् ॥ ९ ॥

अगमनीयाङ्गत्वेति स्वभार्यां रजस्वलां गत्वा. षष्ठ्यादिषु वा प्रतिषिद्धरात्रिषु गत्वा। अयाज्यः न्यस्तमार्त्विज्यमिति निषिद्धः। अभोज्यं लशुनादि गणिकान्नादि च। अप्रतिग्राह्यं शस्त्रविषमित्यादि. अप्रतिग्राह्यपुरुषद्रव्यं वा। अग्निचयनस्थं यूपं स्पृष्ट्वा च। तेषु पञ्चसु निमित्तेषु द्वाभ्यां एताभ्यां जुहुयात्। आज्याहुतिवचनमन्यनिवृत्त्यर्थमिष्यते ॥ ९ ॥

समिधौ वा ॥ १० ॥

आदध्यादिति शेषः ॥ १० ॥

जपेद्वा ॥ ११ ॥  ॥ ६ ॥

जपपक्षे स्वाहाकारं त्यजेत्. प्रदानाभावात् ॥ ११ ॥

इति तृतीये षष्ठी कण्डिका ॥ ०॥

---

अव्याधितश्चेत् स्वपन्तमादित्योऽभ्यस्तमियाद्वाग्यतो-ऽनुपविशन् रात्रिशेषम्भूत्वा. येन सूर्यज्योतिषा बाधसे तम इति पञ्चभिरादित्यमुपतिष्ठेत ॥ १ ॥

अव्याधितं स्वपन्तं मन्तं यद्यभ्यस्तमियाद्रविस्ततो वाग्यतोऽनुप-विशंश्च रात्रिशेषं स्थित्वा तत उदिते पञ्चभिरुपतिष्ठेत ॥ १ ॥

अभ्युदियात् चेदं कर्म श्रान्तमनभिरूपेण कर्मणा वाग्यत इति समानमुत्तरापराभिश्चतसृभिरुपस्थानं। ॥ २ ॥

अव्याधितं स्वपन्तं मन्तं विहितकर्मणा अश्रान्तमकर्मश्रान्तमभ्यु-दियात् चेत्। विहितकर्मणा श्रान्ते तु न भवति प्रायश्चित्तं। अन-भिरूपेणाविहितेन कर्मणा नृत्यादिना कर्मणा श्रान्तमभ्युदियाच्चेत् वाग्यतोऽनुपविशंश्चाह्नःशेषं स्थित्वाऽपरेद्युरुदित आदित्ये 'यस्य ते विश्व' इति चतसृभिरुपतिष्ठेत। अथ नित्यकर्मोच्यते॥ २ ॥

यज्ञोपवीती नित्योदकः सन्ध्यामुपासीत वाग्यतः। ॥ ३ ॥

यज्ञोपवीतीति व्याख्यातं। नित्योदकः स्वल्पोदककर्मेत्यर्थः। अतो मार्जनादि कार्यं। सन्ध्यामुपासीत वाग्यतः। एतावत्सन्ध्या-द्वये समानं। प्रतिसन्ध्यमित्थमुपासीतेत्याह॥ ३ ॥

**सायमुत्तरापराभिमुखोऽन्वष्टमदेशं सावित्रीं जपे-दर्धास्तमिते मण्डल आनक्षत्रदर्शनात् ॥ ४ ॥**

सायङ्काले उत्तरां परान्दिशमभिमुखः वायव्याभिमुख इत्यर्थः। तत्रापि नाञ्जसाभिमुखः अपि त्वन्वष्टमदेशमभिमुखः. प्रतीच्यान्दिशि य उत्तरो भागः तदभिमुख इत्यर्थः। सावित्रीं जपेदितः कालादारभ्य आ इतः कालात् ॥ ४ ॥

**एवं प्रातः ॥ ५ ॥**

एवमेव प्रातःकाल उपासीत। तत्र विशेषमाह ॥ ५ ॥

**प्राङ्मुखस्तिष्ठन्नामण्डलदर्शनात् ॥ ६ ॥**

प्राङ्मुख इति वायव्याभिमुखनिवृत्त्यर्थं। तिष्ठन्नित्युपवेशननिवृत्त्यर्थं। अतो ज्ञायते अविशेषे उपवेशनं भवतीति। पूर्वावधिस्तु अर्धास्तमितेषु नक्षत्रेषु। कुतः. पूर्वस्माद्विपरीतत्वात्। उत्तरावधिस्तु अत्रैवोक्तः ॥ ६ ॥

**कपोतश्चेदगारमुपहन्यादनुपतेद्वा. देवाः कपोत इति प्रत्यृचं जुहुयाज्जपेद्वा ॥ ७ ॥**

कपोतो रक्तपादः शुक्लवर्णोऽरण्यवासी. स यद्यगारमुपहन्यात् निषीदेत्तस्मिन् पदङ्कुर्यादित्यर्थः। अगारसमीपं वा गच्छेत् ततोऽनेन जुहुयात्. जपेद्वेदं सूक्तं। प्रत्यृचं व्याख्यातं ॥ ७ ॥

वयमु त्वा पथस्पते इत्यर्थचर्यांश्चरिष्यन् ॥ ८ ॥

अर्थार्थं गच्छन्नेनं प्रत्यृचं जुहुयात्, जपेद्वेदं। अत्र पादग्रहणेऽपि सामर्थ्यात् सूक्तग्रहणं ॥ ८ ॥

सम्पूषन्विदुषा इति नष्टमधिजिगमिषन् मूल्हो वा। • ॥ ९ ॥

नष्टं वस्तु लब्धुमिच्छन् प्रज्ञाहीनो वा जुहुयात्, जपेद्वेदं ॥ ९ ॥

सम्पूषन्नध्वने. इति महान्तमध्वानमेष्यन् प्रतिभयं वा ॥ १० ॥ ॥ ७ ॥

महान्तमध्वानङ्गमिष्यन् अल्पमपि प्रतिभयं भयानकं अध्वानमेष्यन् अनेन जुहुयात्, जपेद्वेदं ॥ १० ॥

इति तृतीये सप्तमी कण्डिका ॥ ०॥

अथैतान्युपकल्पयीत समावर्त्त्यमाने मणिं कुण्डले वस्त्रयुगं छत्रमुपानद्युगं दण्डं स्रजमुन्मर्दनमनुलेपनमाञ्जनमुष्णीषमित्यात्मने चाचार्याय च ॥ १ ॥

उक्तोऽर्थः। उपकल्पयीतेतिशब्दोऽयं छान्दसः। समावर्तनं नाम संस्कारः. तेन संक्रियमाण इत्यर्थः। अर्थादेवोपकल्पने सिद्धे उपकल्पनवचनमत्रात्मने चाचार्याय च एतान्येकादश द्रव्याणि उपकल्पयेदिति विधानार्थं॥ १ ॥

यद्युभयोर्न विन्देताचार्यायैव ॥ २ ॥

यद्युभयोर्न लभेत तदाचार्यायैव केवलायोपकल्पयेत्॥ २ ॥

समिधं त्वाहरेदपराजितायान्दिशि यज्ञियस्य वृक्षस्य ॥ ३ ॥

यज्ञियस्य वृक्षस्य या अपराजिता दिक् ततो गृहीत्वा आहरेत्। यज्ञियस्येति वचनं होमार्थेयं समिदिति ज्ञापयितुं। तेन तिष्ठन् समिधमादध्यादित्यत्र इमामादध्यादिति सिद्धं॥ ३ ॥

आर्द्रामन्नाद्यकामः पुष्टिकामस्तेजस्कामो वा. ब्रह्मवर्चसकाम उपवातां ॥ ४ ॥

शुष्कामित्यर्थः॥ ४ ॥

उभयीमुभयकामः ॥ ५ ॥

आर्द्रशुष्कामित्यर्थः। एको भाग आर्द्रः। अपरो भागः शुष्कः ॥ ५ ॥

उपरि समिधं कृत्वा गामन्नञ्च ब्राह्मणेभ्यः प्रदाय गौदानिकं कर्म कुर्वीत ॥ ६ ॥

आहृतां समिधमुपरि निदध्यात्, न भूमौ। ततो ब्राह्मणेभ्यो गान्दक्षिणां दद्यात्, कर्माङ्गत्वेन भोजनञ्च देयं। ततो गोदानोक्तं कर्मेहापि कुर्यात्। कर्मग्रहणं कर्मैव कुर्यात् नाप्लुत्य वाग्यत इत्यादिनियमाः कार्या इत्येवमर्थं। इदं कर्म स्वयमेव करोति समावर्त्तमाने इत्यधिकारात्, ऊहदर्शनाच्च ॥ ६ ॥

आत्मनि मन्त्रान्त्संनमयेत् ॥ ७ ॥

मन्त्रान् आत्मवाचकान् कुर्यादित्यर्थः। ऊह्यानि ब्रूमः। 'ओषधे त्रायस्व मां। स्वधिते मा मा हिंसीः। वपतेदं ममायुष्मान्। यथासन्ते, नम आयुष इत्युभयत्र। शिरो मुखम्माम आयुः प्रमोषीः' इति ॥ ७ ॥

एकक्रीतकेन ॥ ८ ॥

उन्मर्दनं कुर्वीतेति शेषः। करञ्जबीजस्य यत्रैकं बीजन्तदेकक्रीतकं, तत्पेषयित्वा तेनोन्मर्दनं कारयेत् ॥ ८ ॥

शीतोष्णाभिरद्भिः स्नात्वा, युवं वस्त्राणि पीवसा वसाथे इत्यहते वाससी आच्छाद्य, अश्मनस्तेजोऽसि चक्षुर्मे पाहीति चक्षुषी आञ्जयीत ॥ ९ ॥

प्रतिवस्त्रं मन्त्रावृत्तिः, द्विवचनस्य देवतापरत्वात्। सव्यं पूर्वमाञ्जयित्वा ततो दक्षिणमाञ्जयीत। 'सव्यं मनुष्या अञ्जते प्रथमं' इति श्रुतेः। प्रतिचक्षुर्मन्त्रावृत्तिः॥ ९ ॥

अश्मनस्तेजोऽसि श्रोत्रं मे पाहि, इति कुण्डले आबध्नीत ॥ १० ॥

अनेन कुण्डले आबध्नीत। सुवर्णकुण्डले इत्यर्थः। अत्र दक्षिणं पूर्वं पश्चात्सव्यं। मन्त्रावृत्तिरुक्ता ॥ १० ॥

अनुलेपनेन पाणी प्रलिप्य मुखमग्रे ब्राह्मणोऽनुलिम्पेत्, बाहू राजन्यः, उदरं वैश्यः, उपस्थं स्त्री, ऊरू सरणजीविनः ॥ ११ ॥

पश्चाद्गात्राणि। कुतः, अग्रेवचनात्। अनुलेपनं कुङ्कुमादि। बाहू राजन्यः, अग्रे लिम्पेत्। उदरं वैश्यः, अग्रेऽनुलिम्पेत्। उपस्थं स्त्री, अग्रेऽनुलिम्पेत्। ऊरू सरणजीविनः, अग्रेऽनुलिम्पेरन्। अयं विधिः सार्वत्रिकः। कुतः, स्त्रीविधानात्॥ ११ ॥

अनार्त्तोऽस्यनार्त्तोऽहं भूयासम् इति स्रजमपि बध्नीत न मालोक्तां ॥ १२ ॥

मालेत्युक्तां स्रजमपि न बध्नीत ॥ १२ ॥

मालेति चेद्ब्रूयुः स्रगित्यभिधापयीत ॥ १३ ॥

यद्यज्ञानात् मालेति ब्रूयुः ततः स्रगित्यभिधाप्य बध्नीत ॥१३॥

देवानां प्रतिष्ठे स्थः यदि वम्छद्मासि॰ इति छत्रमादत्ते ॥ १४ ॥

'उपानहौ चर्ममय्यौ ते आतिष्ठेत्' इत्युपानहावास्थाय सकृन्मन्त्रः. द्विवचनात्। ततश्छत्रमादत्ते ॥ १४ ॥

वेणुरसि वानस्पत्योऽसि सर्वतो मा पाहि. इति वैणवन्दण्डं ॥ १५ ॥

आदत्ते ॥ १५ ॥

आयुष्यमिति सूक्तेन मणिं कण्ठे प्रतिमुच्योष्णीषं कृत्वा तिष्ठन्त्समिधोऽभ्यादध्यात् ॥ १६ ॥ ॥ ८ ॥

आयुष्यमितिसूक्तग्रहणं आयुष्यमित्येतावान् मन्त्र इति शङ्कानिवृत्त्यर्थं। कुतः शङ्का. वाक्यस्य परिपूर्णत्वात्। आयुष्यमिति आयुष्करमित्यर्थः। तेन 'नेजमेष' इत्यस्य खिलत्वेऽपि सूक्तग्रहणं सिद्धं। मणिः सुवर्णमयः। उष्णीषं कृत्वा. अहतेन वाससा शिरो वेष्टेत्यर्थः। तिष्ठन्ग्रहणमन्यत्रासीनस्य कर्माणि भवन्तीति ज्ञापनार्थं॥ १६ ॥

अथ तृतीये अष्टमी कण्डिका।

स्मृतन्निन्दा च विद्या च श्रद्धा प्रज्ञा च पञ्चमी। दृष्टन्दत्तमधीतञ्च कृतं सत्यं श्रुतं व्रतं। यदग्ने सेन्द्रस्य सप्रजापतिकस्य सऋषिकस्य सऋषिराजन्यस्य सपितृकस्य सपितृराजन्यस्य समनुष्यस्य समनुष्यराजन्यस्य साकाशस्य सातीकाशस्य सानुकाशस्य सप्रतीकाशस्य सदेवमनुष्यस्य सगन्धर्वाप्सरस्कस्य सहारण्यैश्च पशुभिर्ग्राम्यैश्च यन्म आत्मन आत्मनि व्रतन्तन्मे सर्वव्रतमिदमहमग्ने सर्वतो भवामि स्वाहेति ॥ १ ॥

स्मृतं च मे अस्मृतं च मे तन्म उभयव्रतमिति द्वादशाप्येव मंत्रोक्ताः. ततो यदग्न इत्यादि यथासूत्रमित्येवमुपदिशन्ति। उपानहौ विसृज्य समिदाधानं कार्यं। तथा च गौतमः। 'सोपानत्क आसनाभिवादननमस्कारान् वर्जयेत्' इति ॥ १ ॥

ममाग्ने वर्च इति प्रत्यचं समिधोऽभ्यादध्यात् ॥ २ ॥

अत्र खिलस्यापि ग्रहणं भवति। अथैतस्य समाम्नायस्येत्यत्र समाम्नायग्रहणस्य वितानविशेषणत्वात्. 'समाम्नायस्य वितानें' इति। कुतः एतत्. सूत्रे खिलानां पाठात्. इह च प्रतीकग्रहणात्. तस्मादृग्भिर्होम इति सिद्धं। प्रत्यृचमिति व्याख्यातं। आदध्यादिति प्रकृते पुनरादध्यादिति वचनं पूर्वस्याधिकारनिवृत्त्यर्थं।

तेनोपविश्यादध्यात्. न तिष्ठन्। स्विष्टकृदादि होमशेषं समापयेत्॥ २ ॥

यत्रैनं पूजयिष्यन्तो भवन्ति तत्रैतां रात्रीं वसेत्। ॥ ३ ॥

यत्रात्मानं मधुपर्केण पूजयन्ति तत्रैतां रात्रीं वसेत् वसतिं कुर्यात्। कुतः एतत्. स्नातकायोपस्थितायेति वचनात् मधुपर्केण पूजनमिति लब्धं। अस्य कालमाह ॥ ३ ॥

विद्यान्ते गुरुमर्थेन निमन्त्र्य कृत्वाऽनुज्ञातस्य वा स्नानम्॥ ४ ॥

विद्यान्ते गुरुमर्थेन निमन्त्रयते 'कमर्थमहन्ते करवाणि' इति। गुरुर्यमर्थमाह तं कृत्वा स्नानं करोति। अथवाऽनुज्ञातः स्नायात्। स्नानं समावर्त्तनमित्यर्थः। विद्यान्त इति व्याख्यातं प्राक्॥ ४ ॥

तस्यैतानि व्रतानि भवन्ति॥ ५ ॥

उपदेशादेव व्रतत्वे सिद्धे इदंवचनं नक्तं न स्नायामीत्येवं सङ्कल्पयेदित्येवमर्थं॥ ५ ॥

न नक्तं स्नायात्। न नग्नः स्नायात्। न नग्नः शयीत। न नग्नां स्त्रियमीक्षेतान्यत्र मैथुनात्। वर्षति न धावेत्॥ ६॥

द्रुतगमनप्रतिषेधः॥ ६॥

न वृक्षमारोहेत्। न कूपमवरोहेत्। न बाहुभ्यां नदीन्तरेत्। न संशयमभ्यापद्येत॥ ७॥

अन्यांश्च प्राणसंशयान्नाभ्यापद्येत। यस्मादित्थं श्रूयत इत्यर्थः। वर्षति न धावेदित्यादिप्रतिषेधोऽस्य प्राणसंशयाभ्यापादनप्रतिषेधत्वज्ञापनार्थः। अर्थसंशयाभ्यापादने न दोषः॥ ७॥

महद्धै भूतं स्नातको भवतीति विज्ञायते॥ ८॥ ॥ ९॥

स्नातको हि महद्भूतं इति च श्रूयते। कथं पुनः स्नातकस्य महत्त्वं।

उच्यते। दैवैश्चापि मनुष्यैश्च तिर्यग्योनिभिरेव च।

गृहस्थः सेव्यते यस्मात् तस्मात् श्रेष्ठो गृहाश्रमीति॥ स्मृतेः॥ ८॥

इति तृतीये नवमी कण्डिका॥ ०॥

## गुरवे प्रवक्ष्यमाणो नाम प्रब्रुवीत ॥ १ ॥

समावृत्तः सन् विवक्ष्यमाणः शिष्यः गुरोर्नाम प्रब्रूयात् देवदत्तेति। गुरवे इति चतुर्थी षष्ठ्यर्थे। यथास्मै इति॥ १ ॥

## इदं वत्स्यामो भो इति ॥ २ ॥

तत एवं प्रब्रुवीत। इदंशब्दस्य स्थाने आश्रमं निर्दिशेत्। देवदत्त गार्हस्थ्यं वत्स्यामो भो इति। वत्स्याम इति द्विवचनपाठे ऽर्थोऽनुपपन्नः ॥ २ ॥

## उच्चैरूर्ध्वं नाम्नः ॥ ३ ॥

नाम्न ऊर्ध्वं उच्चैर्ब्रूयात्। गुरुनाम तु उपांश्वेव ब्रूयादित्यर्थः। ॥ ३ ॥

## प्राणापानयोरुपांशु ॥ ४ ॥

ततः प्राणापानयोरित्यृचा इत्येतं मन्त्रं उपांशु ब्रूयाच्छिष्य इत्यर्थः। ननु उत्तरत्र वक्ष्यत्यतो वृद्धो जपतीति तस्मादाचार्यस्योपांशु दृष्टावित्तस्याप्युपांश्वेव भविष्यत्यत उपांश्विति न वाच्यं। उच्यते। जपचोदनायां उपांशुत्वमनित्यमिति ज्ञापनार्थमिदं तेन वेदारम्भणे उच्चैः प्रयोगः सिद्धः। अथ वा उच्चैरित्यधिकारनिवृत्त्यर्थमिदं। वेदारम्भणे तु उच्चैष्ट्वे कारणमन्यदप्युक्तमेव ॥ ४ ॥

**आ मन्द्रैरिन्द्र हरिभिरिति च ॥ ५ ॥**

एतं चोपांशु ब्रूयाच्छिष्यः॥ ५ ॥

**अतो वृद्धो जपति प्राणापानयोरुरुव्यचास्तया प्रपद्ये देवाय सवित्रे परिददामीत्यृचं च ॥ ६ ॥**

अतो वृद्ध आचार्यो जपत्येतौ मन्त्रौ। अतो वृद्धो जपतीति वचनात् पूर्वं शिष्योप्येतौ मन्त्रौ जपतीति ज्ञायते। ऋचश्चेत्यामन्त्रैरित्येतामित्यर्थः॥ ६ ॥

**समाप्यों प्राक् स्वस्तीति जपित्वा महिचीणामित्यनुमन्त्र्य ॥ ७ ॥**

अति सृजेदिति शेषः। *समाप्येति वचनमाचार्य एवों प्रागिति मन्त्रं जपेदित्येवमर्थं। जपित्वा महित्रीणामवोस्त्विति सूक्तेन शिष्यमनुमन्त्र्य वत्स्यथेत्यतिसृजेत्॥ ७ ॥

**एवमतिसृष्टस्य न कुतश्चिद्भयं भवतीति विज्ञायते ॥ ८ ॥**

प्रशंसेयं श्रुतिमूलत्वदर्शनार्था† ॥ ८ ॥

* समापनवचनमिति सो॰ पु॰ पाठः

† दर्शनाय इति सो॰ पु॰ पाठः।

वयसाममनोज्ञा वाचः श्रुत्वा कनिक्रदज्जनुषं प्रब्रुवाण इति सूक्ते जपेद्देवीं वाचमजनयन्त देवा इति च। ॥ ९ ॥

वयांसि पक्षिणः। अमनोज्ञा अप्रियाः॥ ९ ॥

स्तुहि श्रुतं गर्त्तसदं युवानमिति मृगस्य ॥ १० ॥

मृगस्यामनोज्ञा वाचः श्रुत्वा एतां जपेत्॥ १० ॥

यस्या दिशो बिभीयाद्यस्माद्वा तान्दिशमुल्मुकमुभयतः प्रदीप्तं प्रत्यस्येन्मन्थं वा प्रसव्यमालोड्याभयं मित्रावरुणामह्यमस्त्वर्चिषा शत्रून्दहन्तं प्रतीत्यमाज्ञातारं मा प्रतिष्ठां विन्दन्तु मिथो भिन्दाना उभयन्तु मृत्युमिति संसृष्टं धनमुभयं समाकृतमिति मन्थं न्यञ्चङ्करोति॥ ११ ॥ ॥ १० ॥

यस्या दिशो बिभीयात् यस्माद्वा बिभीयात् पुरुषाद्व्याघ्रादन्यतो वा तां दिशं प्रति उभयतः प्रदीप्तमुल्मुकं प्रत्यस्येत् अभयमित्यनेन। मन्थं वा प्रसव्यमालोड्य तां दिशमभिमुखन्यञ्चं कुर्यात् संसृष्टमित्यनेन। मन्थन्यञ्चमेव कुर्यात्। न प्रत्यस्येदित्येवमर्थं पुनर्मन्थग्रहणं ॥ ११ ॥

इति तृतीये दशमी कण्डिका॥ ०॥

---

सर्वतो भयादनाज्ञातादष्टा वाज्याहुतीर्जुहुयात् पृथिवी वृता साग्निना वृता तया वृतया वर्व्या यस्माद्भयाद्बिभेमि तद्वारये स्वाहा। अन्तरिक्षं वृतं तद्वायुना वृतन्तेन वृतेन वर्चेण यस्माद्भयाद्बिभेमि तद्वारये स्वाहा। द्यौर्वृता सादित्येन वृता तया वृतया वर्व्या यस्माद्भयाद्बिभेमि तद्वारये स्वाहा। दिशो वृतास्ताश्चन्द्रमसा वृतास्ताभिर्वृताभिर्वर्चोभिर्यस्माद्भयाद्बिभेमि तद्वारये स्वाहा। आपो वृतास्ता वरुणेन वृतास्ताभिर्वृताभिर्वर्चोभिर्यस्माद्भयाद्बिभेमि तद्वारये स्वाहा। प्रजा वृतास्ताः प्राणेन वृतास्ताभिर्वृताभिर्वर्चोभिर्यस्माद्भयाद्बिभेमि तद्वारये स्वाहा। वेदा वृतास्ते छन्दोभिर्वृतास्तैर्वृतैर्वर्चैर्यस्माद्भयाद्बिभेमि तद्वारये स्वाहा। सर्वं वृतं तद्ब्रह्मणा वृतन्तेन वृतेन वर्चेण यस्माद्भयाद्बिभेमि तद्वारये स्वाहा इति॥ १॥

यदि सर्वतो दिग्भ्योभयमुत्पद्यते न च ज्ञायते अस्मात् पुरुषादिति तत् सर्वतोभयमज्ञातं। तस्मात् यदि बिभीयात् ततो लौकिकाग्नावष्टावाज्याहुतीर्जुहुयात् पृथिवी वृतेत्याद्यैः। अष्टौ वचनमाज्यभागस्विष्टकृन्निवृत्त्यर्थम्। आज्याहुतिवचनं परिस्तरणविकल्पार्थम्॥ १॥

**अथापराजितायां दिश्यवस्थाय स्वस्त्यात्रेयं जपति यत इन्द्र भयामह इति च सूक्तशेषं ॥ २ ॥ ॥ ११ ॥**

स्वस्त्यात्रेयमिति स्वस्तिनोमिमीतामिति सूक्तं सखिलं। ततः सर्वप्रायश्चित्तादि समापयेत्। एवमतिसृष्टस्य न कुतश्चिद्भयं भवतीत्युक्तं। तत्र यद्यमनोज्ञा वाचः शृणुयात् भयं चोत्पद्येत तत एवं कुर्यादिति सर्वमिदमतिसृष्टविषयं ॥ २ ॥

इति तृतीये एकादशी कण्डिका ॥ ०॥

**संग्रामे समुपोल्हे राजानं सन्नाहयेत् ॥ १ ॥**

संग्रामे समुपोल्हे समुपस्थिते *राजानं सन्नाहयेत् पुरोहितः वक्ष्यमाणविधिना ॥ १ ॥

**आत्वाहार्षमन्तरेधीति पश्चाद्रथस्यावस्थाय ॥ २ ॥**

जपेदिति शेषः। अत्र ऋषभं मासमानानामित्यत्र च पादग्रहणे सूक्तग्रहणं भवतीति ज्ञापितश्च प्राक् ॥ २ ॥

---

* राजा इति आदर्शपु०—अशुद्धपाठः।

जीमूतस्येव भवति प्रतीकमिति कवचं प्रयच्छेत् ॥ ३ ॥

अस्य सूक्तस्याद्यया कवचं प्रयच्छेत् राज्ञे ॥ ३ ॥

उत्तरया धनुः ॥ ४ ॥

प्रयच्छेदिति शेषः ॥ ४ ॥

उत्तरां वाचयेत् ॥ ५ ॥

राजानं वाचयेत् ॥ ५ ॥

स्वयञ्चतुर्थीं जपेत् ॥ ६ ॥

स्पष्टं ॥ ६ ॥

पञ्चम्येषुधिं प्रयच्छेत् ॥ ७ ॥

इषवो यत्र धीयन्ते स इषुधिः ॥ ७ ॥

अभिप्रवर्त्तमाने षष्ठीं ॥ ८ ॥

यथष्टान्दिशमभिप्रवर्त्तमाने रथे षष्ठीं जपेत्। एवंविधो मन्त्रो मन्त्रसंज्ञः ॥ ८ ॥

सप्तम्याश्वान् ॥ ९ ॥

अनुमन्त्रयेतेति शेषः ॥ ९ ॥

*अष्टमीमिषूनवेक्षमाणं वाचयति ॥ १० ॥

†इषूनवेक्षमाणं राजानं अष्टमीं वाचयेत् ॥ १० ॥

अहिरिव भोगैः पर्य्येति बाहुमिति तलं नह्यमानं ॥ ११ ॥

ज्याघातपरित्राणं तलमुच्यते ‡तलं नह्यमानं राजानं एतां वाचयेत् ॥ ११ ॥

अथैनं सारयमाणमुपारुह्याभीवर्त्तं वाचयति प्रयोवां मित्रावरुणेति च द्वे ॥ १२ ॥

सारथिना सारयमाणं राजानं रथे उपारुह्य अभीवर्त्तेनेति सूक्तं वाचयेत्। प्रयोवामित्यृचौ च ॥ १२ ॥

---

* अष्टमीषु नवेक्षमाणमिति आदर्शपु०—अशुद्धपाठः ।

† इषूनीक्षमाणमिति सो० पु० पाठः ।

‡ तेन इति सो० पु० पाठः ।

# BIBLIOTHECA INDICA;

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE SUPERINTENDENCE OF THE

## ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 143.




गृह्यसूत्रम् ।

आश्वलायनप्रणीतम् ।

गार्ग्यनारायणीयवृत्तिसहितम् ।

श्रीआनन्दचन्द्र-वेदान्तवागीशेन परिशोधितम् ।

---

## THE GRIHYA SU'TRA OF A'S'VALA'YANA,

WITH THE

COMMENTARY OF GA'RGYA-NA'RA'YAṆA,

EDITED BY

A'NANDACHANDRA VEDÁNTAVÁGÍS'A.

FASCICULUS III.

CALCUTTA:

PRINTED BY C. B. LEWIS, AT THE BAPTIST MISSION PRESS.

1868.

## SANSKRIT WORKS PUBLISHED,

IN THE NEW SERIES.

Rs. as

The Vais'eshika Sútras, with commentaries, by Pandita Jayanárayana Tarkapanchánana. Complete in 5 Fasc. Nos. 4, 5, 6, 8 and 10. ... ... ... ... ... 3 2

The Sándilya Sútras with S'wapnes'wara's commentary, edited by J. R. Ballantyne, L.L. D. Complete in 1 Fasc. No. 11. 0 10

The Kaushítaki-Bráhmana Upanishad with S'añkaránanda's commentary, edited, with a translation, by E. B. Cowell, M. A. Complete in 2 Fasciculi, Nos. 19 and 20. ... 1 4

A translation of the Súrya Siddhánta and Siddhánta S'iromani, by Pandita Bápú Deva S'ástrí, under the superintendence of the Ven. Archdeacon Pratt. Complete in 3 Fasc. Nos. 1, 13 and 28. ... ... ... ... ... ... 1 14

The Kávyádars'a of S'rí Dandin, edited, with a commentary, by Pandita Premachandra Tarkavágís'a. Complete in 5 Fasciculi. Nos. 30, 33, 38, 39 and 41. ... .. ... 3 2

The Brihatsañhitá of Varáha-Mihira, edited by Dr. H. Kern. Complete in 7 Fasciculi. Nos. 51, 54, 59, 63, 68, 72 and 73. 4 6

A translation of the Sáñkhya Aphorisms of Kapila, by J. R. Ballantyne, L.L. D. Complete in 2 Fasc. Nos. 32 and 81.

The Das'a Rúpa, with the exposition of Dhanika, edited by F. E. Hall, D. C. L. Complete in 3 Fasc. Nos. 12, 24, and 82. ... ... ... ... ... ... 1 14

Sáñkhya Sára, a treatise on Sánkhya Philosophy, edited by F E Hall, D C. L. Oxon.—No. 83. ... ... ... 0 10

The Narada Pancharátra, edited by Rev. K. M. Banerjea, Complete in 4 Fasc. Nos. 17, 25, 34 and 75. ... ... 2 8

Nyaya Dars'ana of Gotama, with the commentary of Vátsyáyana, edited by Pandita Jayanáráyana Tarkapanchánana. Complete in 3 Fasc. Nos. 56, 67 and 70. ... ... 1 14

The S'rauta Sútra of A's'waláyana, with the commentary of Gárgya Náráyana. Edited by Pandita Rámanaráyana Vidyaratna. Complete in 10 Fasc. ... ... ... 6 4

---

## SANSKRIT WORKS IN PROGRESS.

The Maitri Upanishad, with the commentary of Rámatírtha, edited, with an English Translation, by E. B. Cowell, M. A. Fasc. I. and II. Nos. 35 and 40.

The Mímáñsá Dars'ana, with the commentary of Sabara Swámin, edited by Pandita Mahes'achandra Nyáyaratna, Fasc. I. to V Nos. 44, 85, 95, 101, 115.

The Taittiríya A'ranyaka of the Black Yajur Veda, with the commentary of Sáyanácháryya, edited by Bábu Rájendralála Mitra. Fasc. I II. III. IV. and V. Nos. 60, 74, 88. 97 and 130.

The Sañkara Vijaya of Anantánanda Giri, edited by Pandita Navadwipachandra Goswámi. Fasc. I. II. III. Nos. 46, 137 and 138

अथैनमन्वीक्षेताप्रतिरथेशास सौपर्णैः ॥ १३ ॥

एनं राजानमन्वीक्षेत एतैः सूक्तैः। आशुःशिशान इति सूक्तमप्रतिरथं। शास इत्येति सूक्तं शासः। सौपर्णसूक्तानां बहुत्वादिशेष माह ॥ १३ ॥

प्रधारयन्तु मधुनो घृतस्येत्येतत् सौपर्णं ॥ १४ ॥

एतत् सूक्तं सौपर्णं भवति। नान्यत् ॥ १४ ॥

सर्वा दिशोऽनुपरीयायात् ॥ १५ ॥

अथ राजा सर्वा दिशो रथेनानुक्रमेण* गच्छेत् ॥ १५ ॥

आदित्यमौशनसं वावस्थाय प्रयोधयेत् ॥ १६ ॥

यस्यां दिश्यादित्यस्तां दिशमास्थायाहनि चेत्। रात्रौ चेद्यस्यां दिशि शुक्रः तां दिशं परिगृह्य योधयेद्राजा। न प्रत्यादित्यं युध्येत† नापि प्रतिशुक्रमित्यर्थः ॥ १६ ॥

उपश्वासय पृथिवीमुत द्यामिति तृचेन दुन्दुभिमभिमृशेत् ॥ १७ ॥

राजा ॥ १७ ॥

अवसृष्टा परापतेतोपून्विसर्जयेत् ॥ १८ ॥

राजा ॥ १८ ॥

---

* क्रमेण इति सो॰ पु॰ पाठः।

† युध्येत इति सो॰ पु॰ नास्ति।

**यत्र बाणाः सम्पतन्तीति युध्यमानेषु जपेत्॥ १९ ॥**

पुरोहितः॥ १९ ॥

**संशिष्याद्वा संशिष्याद्वा॥ २० ॥ ॥ १२॥**

अथवा राज्ञे पुरोधा आचक्षीत एकस्मिन् काले इयमृक् तत्रेति। यथा आलाहार्षमिति सूक्तं पश्चाद्रथस्यावस्थाय ब्रूहि जीमूतस्येति कवचं गृहाणेत्येवमादि। अध्यायान्तलक्षणार्थं *द्विर्वचनार्थं॥ २०॥

इति तृतीये द्वादशी कण्डिका॥०॥

इत्याश्वलायनगृह्यसूत्रविवरणे नारायणीयायां वृत्तौ तृतीयोऽध्यायः।

* द्विर्वचनमिति सो॰ पु॰ समीचीनः पाठः

॥ ॐ ॥

*आहिताग्निश्चेदुपतपेत्प्राच्यामुदीच्यामपराजितायां वा दिश्युदवस्येत् ॥ १ ॥

आहिताग्निश्चेत् व्याधिरुपतपेत् पीडयेत्। तथा सति आहिताग्निरग्निभिः सह ग्रामान्निष्क्रम्य प्राच्यामुदीच्यामपराजितायां वा दिशि उदवस्येत्। गत्वा तत्रैव तिष्ठेत् यावदगदो भवति॥ १ ॥

ग्रामकामा अग्नय इत्युदाहरन्ति ॥ २ ॥

अग्नयो ग्रामकामा इति ब्रह्मवादिनः †प्रवदन्ति। तस्मादुदवस्येत्। ग्रामकामत्वे सत्यपि किमित्युदवस्येदित्याशङ्क्याह ॥ २ ॥

आशंसन्त एनं ग्राममाजिगमिषन्तोऽगदङ्कुर्युरिति ह विज्ञायते ॥ ३ ॥

ग्राममागन्तुमिच्छन्तोऽग्नय एनमाहिताग्निमाशंसन्ते। अयमगदो भवेदिति। आशंसमानाश्च एनं अगदं अरोगं कुर्युः एवं हि श्रूयते। श्रुत्याकर्षो गृह्यकर्म समुत्पन्नश्रुतिमूलमिति दर्शनार्थः सर्वत्र॥ ३ ॥

अगदः सोमेन पशुनेष्ट्येष्ट्वावस्येत् ॥ ४ ॥

अगदः अरोगः। सोमादिभिरिष्ट्वा ग्रामं प्रविशेत्। अथ कः सोमः

---

* आहिताग्निं इति मुद्रितपुस्तके, तन्न समीचीनं।

† प्राहुरिति सो० पु० पाठः।

कार्यः अग्निष्टोमः। कुतः सर्वसोमानां प्रकृतित्वात्। उक्तं च। स एव हेतुः प्रकृतिभाव इति। कः पशुः कार्य ऐन्द्राग्नः। निरूढानां प्रकृतित्वात्। इष्टीनां पौर्णमासातिदेशोऽस्ति। सर्वत्र देवतागमे नित्यानामपाय इति ब्रुवता अनागमे अनपाय इत्यपि दर्शितं भवति। तेनेष्टौ पशौ च प्रकृता एव देवता इति सिद्धं। तर्हीष्टौ तिस्रः प्रसज्येरन्। अग्नीषोमयोः स्थान इन्द्राग्नी इति ब्रुवता अग्नेः स्थिरत्वं दर्शितं। तेनाग्निरेव केवलो भवति नान्ये द्वे। अत्र पूर्वाभ्याम उत्तरोत्तरं कर्मेत्युपदिशन्ति ॥ ४ ॥

अनिष्ट्वा वा ॥ ५ ॥

ग्रामं प्रविशेत्॥ ५ ॥

संस्थिते भूमिभागं खानयेद्दक्षिणपूर्वस्यान्दिशि दक्षिणापरस्यां वा ॥ ६ ॥

अगदे सत्युक्तं। अथ संस्थिते मृते सत्युच्यते। भूम्येकदेशं खानयेत्। आग्नेय्यां नैरृत्यां वा ॥ ६ ॥

दक्षिणाप्रवणं प्राग्दक्षिणाप्रवणं वा प्रत्यग्दक्षिणाप्रवणमित्येके ॥ ७ ॥

खातं दक्षिणाप्रवणं खानयेत्। आग्नेयीप्रवणं वा ॥ ७ ॥

*या वानुद्बाहुकः पुरुषस्तावदायामं ॥ ८ ॥

* या वाहुनूर्द्ध्वबाहुक इति प्रतीकपु० अशुद्धपाठः

यावत्परिमाण ऊर्ध्वबाहुकः पुरुषस्तावत्परिमाणं दीर्घं भवति खातम् * ॥ ८ ॥

**व्याममात्रन्तिर्यक् ॥ ९ ॥**

पञ्चारत्निमात्रं व्याम भवति। तिर्यक्खाततावन्मात्रं भवेत्॥ ९ ॥

**वितस्त्यर्व्वाक् ॥ १० ॥**

द्वादशाङ्गुलो वितस्तिः। तावन्मात्रमधस्तः कुर्यात्। खातलक्षणमुक्त्वा तस्य देशमाह॥ १० ॥

**अभित आकाशं श्मशानं॥ ११ ॥**

श्मशानग्रहणेनात्र श्मशानद्वयं गृह्यते। कुतः। उत्तरत्र विशेषणाद्दाहनस्य लक्षणं श्मशानस्येति। दहनदेशश्च श्मशानं मञ्चित्य यत्रास्थीनि निधीयन्ते तच्च श्मशानं। तद्द्वयं सर्वत आकाशं भवेत्। अभित आकाशमिति ब्रुवता मध्ये तदनाकाशं भवेदिति ज्ञाप्यते। ॥ ११ ॥

**बहुलौषधिकं॥ १२ ॥**

तत् उभयं बहुलौषधिकं भवेत्॥ १२ ॥

**कण्टकिक्षीरिणस्त्विति यथोक्तं पुरस्तात्॥ १३ ॥**

कण्टकिक्षीरिणस्त्विति यथोक्तं वास्तुपरीक्षायां तथेहापि कुर्यात् कण्टक्यादीनि षडुद्वासयेत्। उभयश्मशानेपीत्यर्थः॥ १३ ॥

---

* चाग्नेय्यायतं कुर्य्यादिति सो॰ पु॰ अधिकपाठः।

**यत्र सर्वत आपः [*]प्रस्यन्देरन्नेतदादहनस्य लक्षणं श्मशानस्य ॥ १४ ॥**

यस्मिन् देशे सर्वत आपो गच्छन्ति। एतदादहनश्मशानस्य लक्षणं। नास्थिनिधानस्य श्मशानस्य। पूर्वाणि तूभयस्येत्युक्तं। सर्वतो निम्नो मध्यत उच्छ्रितो यो देशः पूर्वोक्तलक्षणयुक्तश्च भवेत् तत्र खानयेदित्यर्थः ॥ १४ ॥

**केशश्मश्रुलोमनखानी[†]त्युक्तं पुरस्तात् ॥ १५ ॥**

केशश्मश्रुलोमनखानीति यदुक्तं पुरस्तात् सूत्रस्य षष्ठाध्याये दीक्षितमरणे तदिहापि कुर्यात् इत्यर्थः। तत्रैवमुक्तं। संस्थिते तीर्थेन [‡]निष्कृस्यावभृथे प्रेतालङ्कारान् कुर्वन्ति केशश्मश्रुलोमनखानि वापयन्ति नलदेनानुलिम्पन्ति[§]। नलदमभियुक्तेभ्यो विज्ञेयं। निःपुरीषमेके कृत्वा पृषदाज्यस्य पूरयन्ति अहतस्य वाससः पाशतः पादमात्रमविच्छिद्य प्रोर्णुवन्ति प्राग्दशेनाविः पादं। मूलस्याशः। अग्रं दशा। प्राक्शिरसं प्रेतं शाययित्वा प्रेतं प्रोर्णुयुः। वासो अग्रं पादतो यथा भवेदित्यर्थः। अवच्छेदं प्रेतस्य पुत्रा अमात्याः कुर्वीरन्निति। संगृह्णीयुरित्यर्थः ॥ १५ ॥

**द्विगुल्फं बर्हिराज्यञ्च ॥ १६ ॥**

द्विगुल्फं प्रभूतं बर्हिराज्यञ्च उपकल्पयेदिति शेषः ॥ १६ ॥

---

* प्रध्वंसेरन्निति प्रतीकपु॰ असमीचीनपाठः।

† वापयन्तीति मु॰ पु॰ अधिकपाठः।

‡ निर्हृत्यावभृथे इति सो॰ पु॰ पाठः।

§ नलदमालां प्रतिमुञ्चन्ति इति सो॰ पु॰ अधिकपाठः।

दधन्यत्र सर्पिरानयन्त्येतत्पित्र्यं पृषदाज्यं ॥ १७ ॥
॥ १ ॥

अत्र प्रेतकर्मणि दधनि सर्पिरानयन्ति। एतत् पृषदाज्यं भवति। तच्च *बहु कल्पयेत्। आसेचनवन्ति पृषदाज्यस्येत्यत्रैतत् गृह्णीयात्। अत्र ग्रहणं प्रेतकर्मणि सर्वत्रैतदेव पृषदाज्यं भवतीत्येवमर्थं। तेन निःपुरीषमेके कृत्वा पृषदाज्यस्य पूरयन्तीत्यत्रापि अस्यैव पृषदाज्यस्य ग्रहणं सिद्धं। आनयन्तीति बहुवचनं कर्तुरनियमार्थं। पित्र्यमिति पित्र्यकर्मसम्बन्धि एतत् पित्र्यं पृषदाज्यमित्यर्थः। एवं ब्रुवता प्रेतकर्मापि पितृकर्मेत्युक्तं भवति। तेनास्मिन् कर्मणि प्राग्दक्षिणाभिमुखत्वं कर्मणां कर्तृणाञ्च सिद्धं। प्राचीनावीतित्वञ्च भगवता बौधायनेनाप्युक्तं। किमु खलु प्राचीनावीतिना पितृमेधः कार्य्यः। यज्ञोपवीतिना चेति प्राचीनावीतिनेत्येव ब्रूयात्। पितॄणां वा एष मेधो देवानां वा अन्ये मेधा भवन्ति। निवीतिनस्त्वेवैनं वहेयुः इति। आग्नेयीं दिशं प्रसुत्य एषा हि पितॄणां प्राची दिगिति विज्ञायते इति चोक्तं॥ १७ ॥

इति चतुर्थे प्रथमा कण्डिका॥०॥

अथैतान्दिशमग्नीन्नयन्ति यज्ञपात्राणि च॥ १॥

यस्यान्दिशि भूमिभागः खानितः तान्दिशं प्रत्यग्नीन्नयन्ति। ततो यज्ञपात्राणि च नयन्ति बान्धवाः॥ १ ॥

---

* उपकल्पयेदिति सो० पु० पाठः।

अन्वञ्चं प्रेतमयुजोऽमिथुनाः प्रवयसः ॥ २ ॥

यज्ञपात्राणामनन्तरं पृष्ठभागतः प्रेतं नयन्ति। अयुजो विषमाः। अमिथुनाः स्त्रियः पुरुषश्च न मिश्राः स्युरित्यर्थः। प्रवयसः प्रगतवयसो वृद्धा इत्यर्थः। उपदेशादेव पृष्ठतो भावे सिद्धे अन्वञ्चग्रहणं पूर्वत्रानियमज्ञापनार्थं। तेन अग्रतो वा प्रथमन्नीयेरन्। यज्ञपात्राणि चेत्यनियमः सिद्धः॥ २ ॥

पीठचक्रेण गोयुक्तेनेत्येके॥ ३ ॥

एके गोयुक्तेन पीठचक्रेण शकटादिना प्रेतनयनङ्कार्यमित्याहुः॥ ३ ॥

अनुस्तरणीं॥ ४ ॥

अत्राप्येकग्रहणं सम्बध्यते। मध्यगतस्य विशेषाभावात् प्रयोजनवत्त्वाच्च। तेनानुस्तरणी अनित्या कात्यायनेनाप्युक्तं। न वास्थिसन्देहादिति। अनुस्तरणी कृता चेदस्थिसञ्चयनकाले कानि यजमानस्यास्थीनि कानि वा अनुस्तरण्या इति सन्देहः स्यात् तस्मान्न भवतीत्यर्थः। प्रेतमनुस्तर्यते या स्त्री पशुः सानुस्तरणी तामेके इच्छन्ति॥ ४ ॥

पशुविशेषमाह।

गां॥ ५ ॥

तामनुस्तरणीं गां कुर्यात्॥ ५ ॥

**अजां वैकवर्णाम् ॥ ६ ॥**

अजां वा येन केनचिदेकेन वर्णेन युक्तां कुर्यात् ॥ ६ ॥

**कृष्णामेके ॥ ७ ॥**

इच्छन्ति ॥ ७ ॥

**सव्ये *बाहू बद्ध्वानुसङ्कालयन्ति ॥ ८ ॥**

पशोः सव्ये बाहौ रज्जुं बद्ध्वा अनु प्रेतस्य पृष्ठतः सङ्कालयन्ति नयन्ति बान्धवाः ॥ ८ ॥

**अन्वञ्चोऽमात्या अधोनिवीताः प्रवृत्तशिखा ज्येष्ठप्रथमाः कनिष्ठजघन्याः ॥ ९ ॥**

गच्छेयुरिति शेषः। प्रेतस्य पृष्ठतोऽमात्या बान्धवा अधोनिवीतं येषान्ते अधोनिवीता अनुपरि वाससः यज्ञोपवीतानि चाधःकृत्वेत्यर्थः। प्रवृत्तशिखाः विमुक्तकेशाः ज्येष्ठप्रथमा इत्युच्यमाने सर्वेषां यो ज्येष्ठः स प्रथमः स्यादितरेषां अनियमः स्यात्। तस्माद्यो यो ज्येष्ठः स स प्रथमो गच्छेत् यो यः कनिष्ठः स स पृष्ठतो गच्छेत्। इत्यानुपूर्व्यसिद्ध्यर्थमुभयवचनं। एवंभूता गच्छेयुः ॥ ९ ॥

---

* बाहौ इति मुद्रितपु० समीचीनपाठः।

प्राप्यैवं भूमिभागङ्गर्त्तोदकेन शमीशाखया त्रिः प्रसव्यमायतनं परिव्रजन् प्रोक्षत्यपेतवीतविचसर्पतात इति ॥ १० ॥

एवं सर्वं भूमिभागं प्राप्य ततो दहनस्य कर्त्ता उदकेन शमीशाखया त्रिरप्रदक्षिणमायतनम्परिव्रजन् प्रोक्षति अपेतवीतेत्यनया मन्त्रावृत्तिरुक्ता। आयतनं खातमित्यर्थः। अन्ये गर्त्तोदकेनेति पठन्ति। अयमर्थः। खातखननकाले उत्तरपुरस्तादाहवनीयस्य जानुमात्रङ्गर्त्तं खात्वा तत्रापो निषिच्यावकांशीपालञ्चावधाय तदुदकेनेति। कर्त्ता तु स्मृतिगम्यः॥ १० ॥

दक्षिणपूर्व उद्धृतान्त आहवनीयं निदधाति ॥ ११ ॥

दक्षिणपूर्वे देशे खातस्यान्ते एकदेशे आहवनीयन्निदध्यात्। खाताद्बहिरित्येके। उत्तरत्राप्येवं नेयं॥ ११ ॥

उत्तरपश्चिमे गार्हपत्यं॥ १२ ॥

उद्धृतान्ते निदधातीति वर्त्तते॥ १२ ॥

दक्षिणपश्चिमे दक्षिणं॥ १३ ॥

द्वयं वर्त्तते ॥ १३ ॥

अथैनमन्तर्वेद्योध्मचितिं चिनोति यो जानाति ॥ १४॥

अथशब्दः कर्मान्तरास्तित्वज्ञापनार्थः। तेन प्रणीता अस्मिन् काले चमसेन प्रणयेत्। अनुमन्त्रणदर्शनात्। अन्यत्तु मन्त्रन्नेति वक्ष्यामः। अपि चास्मिन् काले खाते हिरण्यशकलं निधाय तिलानवकीर्य तत इध्मचितिं चिनुयादिष्टत्वात्। अग्नीनां मध्ये खाते इध्मभृताश्चितिं दहनसमर्थां चिनोति कुशलो यो जानातीति कर्त्तुर्नियमः। एनमिति वचनमिदानीमेनञ्चिनुयादपरिष्टाच्चार्थप्राप्तमपि कुशल* एव चिनुयादित्येवमर्थः ॥ १४ ॥

तस्मिन् बर्हिरास्तीर्य कृष्णाजिनञ्चोत्तरलोम तस्मिन् प्रेतं संवेशयन्त्युत्तरेण गार्हपत्यं हृत्वाहवनीयमभि-†मुखशिरसं ॥ १५ ॥

कथ कर्त्ता तस्मिंश्चितौ बर्हिरास्तृणाति ततः कृष्णाजिनञ्चोर्ध्वलोमास्तृणाति कर्त्तैव, क्त्वाप्रत्यये पूर्वकालतामात्रमेव विवक्षितं न समानकर्तृत्वमिति साधितं प्राक्। अथ तस्मिन् कृष्णाजिने उत्तरेण गार्हपत्यं प्रेतं नीत्वा तत आहवनीममभिमुखशिरसं प्रेतं सम्वेशयन्ति बान्धवाः॥ १५ ॥

उत्तरतः पत्नीं ॥ १६ ॥

ततः प्रेतस्योत्तरतः प्रेतस्य पत्नीं सम्वेशयन्ति। शाययन्तीत्यर्थः।

* शकुन इति आदर्शपु० अशुद्धपाठः।

† अभिशिरसमिति मुद्रितपु० पाठः।

चितावेव *उपवेशेय इति लिङ्गात् एतावद्वर्णत्रयस्यापि समानं।
॥ १६ ॥

धनुश्च क्षत्रियाय ॥ १७ ॥

प्रेतः क्षत्रियश्चेद्धनुरप्युत्तरतः संवेशयन्ति ॥ १७ ॥

तामुत्थापयेद्देवरः पतिस्थानीयोऽन्तेवासी जरद्दासो वोदीर्ष्वनार्यभिजीवलोकमिति ॥ १८ ॥

अथ पत्नीमुत्थापयेत्कः देवरः पतिस्थानीयः स पतिस्थानीय- इत्युच्यते। अनेन ज्ञायते पतिकर्तृकं कर्म पुंसवनादि पत्यसम्भवे देवरः कुर्यादिति। अन्तेवासी शिष्यः। स वा। यो बहुकालं दास्यं कृत्वा वृद्धोऽभूत्स वा॥ १८।

कर्त्ता वृषले जपेत् ॥ १९ ॥

जरद्दासे उत्थापयितरि कर्त्ता मन्त्रं ब्रूयात्। अन्यदोत्थाप- यितैव ब्रूयात्॥ १९ ॥

धनुर्हस्तादाददानो मृतस्येति धनुः ॥ २० ॥

धनुरित्यृचा धनुरुत्थापयेदपनयेदित्यर्थः। कः देवरादिः॥ २०॥

उक्तं वृषले ॥ २१ ॥

कर्त्ता वृषले जपेदित्यर्थः॥ २१ ॥

---

* अशुद्धमनुमीयते।

अधिज्यं कृत्वा सञ्चितिमचित्वा संशीर्यानु प्रहरेत्।
॥ २२ ॥ ॥ २ ॥

अर्थप्राप्तं यत्प्रेतस्योपरि सञ्चयनं तस्मिन् काले सञ्चितेः प्रागधिज्यं कृत्वा धनुरुपरिज्यं कृत्वा संशीर्य भंक्त्वा क्षिपेत्। प्रेतस्योत्तरतश्चितावेवोपरि सञ्चितिस्तु उरसि होमानन्तरं कार्या। धनुःसंवेशनं धनुरुपनयनं *धनुःसु प्रहरणमिति क्षत्रियस्य विशेषः। अन्यत्सर्वं त्रयाणां समानं॥ २२ ॥

इति चतुर्थे द्वितीया कण्डिका ॥०॥

---

अथैतानि पात्राणि योजयेत्॥ १ ॥

अथशब्दोऽस्मिन् काले कर्मान्तरास्तित्वज्ञापनार्थः। तेन हिरण्यशकलैः प्रेतस्य सप्तच्छिद्राणि शीर्षण्यान्यपिधत्ते। आस्यन्नासिकाद्वयं अक्षिद्वयं कर्णद्वयं इति। घृतमिश्रांश्च तिलान् प्रेते अवकिरेत्। ततः पात्रयोजनं। एतानीति विद्यमानानि निर्दिश्यन्ते। प्राकृतानि वैकृतानि च। तत्र प्राकृतानां पात्राणां यावज्जीवं धारणमस्ति अग्निवत्सर्वकर्मशेषत्वात्। अग्न्याधाने उत्पन्नानि प्राकृतानि। वैकृतो तु वरुणप्रघासादावुत्पन्नानां कर्मान्ते उत्सर्गः। विकृ-

* धनुरुत् इति का० पु० पाठः।

तिमध्ये मृतश्चेत्तेषामपि योजनं कार्यं। विनियोगविधानसामर्थ्या-देव वैकृतानामपि ग्रावादीनां धारणं कार्यमित्याशङ्का न कार्या। विधानस्य कर्ममध्ये कृतार्थत्वात्। प्राकृतानां धारणे कारणमन्यदुक्तं। तेन यावन्ति पात्राणि विद्यन्ते प्राकृतानि वैकृतानि च तावतां सर्वेषामेव योजनङ्कार्यं। न पुनर्विनियोगविधानसामर्थ्याद्धारणं कार्यं अन्यतो धृतानां योजनमेव विधीयत इति सिद्धं ॥ १ ॥

## दक्षिणे हस्ते जुहूं ॥ २ ॥

योजयेदिति सर्वत्र सम्बन्धनीयं। वरुणप्रघासादौ मृतश्चेज्जुहूद्वयमपि योजनीयं। एकवचनन्तु दशापवित्रेण ग्रहं सम्मार्ष्टीतिवदविवक्षितं॥ २ ॥

## सव्य उपभृतं ॥ ३ ॥

एकवचनं पूर्ववत्॥ ३ ॥

## दक्षिणे पार्श्वे स्फ्यं। सव्येऽग्निहोत्रहवणीं ॥ ४ ॥

ययाग्निहोत्रं हूयते साग्निहोत्रहवणी॥ ४ ॥

## उरसि ध्रुवां। शिरसि कपालानि। दत्सु ग्राव्णः। ॥ ५ ॥

दन्तेषु ग्राव्णो योजयेत् सोममध्ये मृतश्चेत्। अन्यत्र तु अव-

भृथे त्यजन्ते। अत एव ज्ञायते सोमयाजिनोऽग्निचितश्चैतदेव मन्त्रयनान्तं विधानन्नाधिकमिति। यत्तु परैरुक्तं प्रेषणान्तं सोमयाजिनः चित्यन्तमग्निचित इति तदाचार्यस्य नेष्टं। अत एव न प्रदर्शितं। कात्यायनादिभिरपि तन्न विहितमेव। न बह्वृचैर्वाजसनेयिभिर्वा पुनर्दहनं लोष्टचितिर्वा स्वयमाचार्यते। बह्वल्पं वा स्वगृह्योक्तमिति वचनात्तन्न कार्यं॥ ५ ॥

## नासिकयोः स्रुवौ ॥ ६ ॥

द्विवचनं विकृत्यपेक्षं अध्वर्युवशादग्निहोत्रार्थं वा द्वितीयं॥ ६ ॥

## भित्वा चैकं ॥ ७ ॥

एकश्चेत् स्रुवस्तथा सति तं स्रुवं भित्वा नासिकाद्वये योजयेत्। ॥ ७ ॥

## कर्णयोः प्राशित्रहरणे ॥ ८ ॥

द्विवनं पूर्ववत्॥ ८ ॥

## भित्वा चैकं ॥ ९ ॥

पूर्ववदिति॥ ९ ॥

## उदरे पात्रीं ॥ १० ॥

यस्यां हवींषि साद्यन्ते सा पात्री॥ १० ॥

समवत्तधानञ्च चमसं ॥ ११ ॥

यस्मिन्नुपक्षापनार्थं अवत्ता इड़ा धीयते स चमसः समवत्तधानं तञ्चोदरे योजयेत् ॥ ११ ॥

उपस्थे शम्यां ॥ १२ ॥

ऊर्व्वोरूर्ध्वप्रदेश उपस्थः ॥ १२ ॥

अरणीमूर्वोः । उलूखलमुसले जङ्घयोः ॥ १३ ॥

यथासङ्ख्यं ॥ १३ ॥

पादयोः शूर्पं ॥ १४ ॥

इदमपि द्विवचनं विकृत्यपेक्षं ॥ १४ ॥

छित्त्वा चैकं ॥ १५ ॥

एकश्चेच्छूर्पं छित्वा पादयोर्योजयेत् । अनिर्दिष्टानि तु पात्राण्यनियतकालानि अनियतदेशानि भवन्ति ॥ १५ ॥

आसेचनवन्ति पृषदाज्यस्य पूरयन्ति ॥ १६ ॥

यानि पात्राण्यासेचनवन्ति बिलवन्ति पृषदाज्यधारणसमर्थानीत्यर्थः । तानि पृषदाज्यस्य पूरयन्ति । बहुवचनङ्कर्त्तुरनियमार्थं पूरयित्वा पूरयित्वा योजयेत् । कुतः एतत् । घर्मोत्सादने तद्दृष्टत्वात् ॥ १६ ॥

## अमा पुत्रो दृषदुपले कुर्वीत ॥ १७ ॥

दृषदुपले पुत्रः अमा कुर्वीत आत्मन उपयोगार्थं संगृह्णीया-
दित्यर्थः। तेन गृह्णान्नानयेदिति ॥ १७ ॥

## लौहायसञ्च कौलालं ॥ १८ ॥

संगृह्णीयात्। अन्यानि सर्वाणि यज्ञायुधानि योजयेत् ॥ १८ ॥

## अनुस्तरण्यावपामुत्खिद्य शिरोमुखं प्रच्छादयेद्-
## ग्नेर्व्वर्मपरिगोभिर्व्ययस्वेति ॥ १९ ॥

वपामुत्खिद्य प्रेतस्य शिरोमुखञ्च प्रच्छादयेत्। अग्नेरित्यृचा।
उत्खिद्यवचनमुत्खेदनमेव कार्यं। नान्यत्पाशुकं तन्त्रमित्येवमर्थं।
संज्ञपनं त्वर्थप्राप्तं ॥ १९ ॥

## वृक्का उद्धृत्य पाण्योरादध्यादति द्रवसारमेयौ श्वा-
## नाविति दक्षिणे दक्षिणं सव्ये सव्यं ॥ २० ॥

ततो वृक्का उद्धृत्य प्रेतस्य पाण्योरादध्यात्। अतीत्यृचा। द-
क्षिणे पाणौ दक्षिणं वृक्कं सव्ये सव्यं सकृन्मन्त्रः ॥ २० ॥

## हृदये हृदयं ॥ २१ ॥

हृदयमुद्धृत्य हृदय आदध्यात्तूष्णीं ॥ २१ ॥

पिण्डौ चैके ॥ २२ ॥

एके पिण्डौ च पाण्योरादध्यादित्याहुः। एवं वृक्कयोः पिण्डयोश्च समुच्चयः ॥ २२ ॥

वृक्कापचार इत्येके ॥ २३ ॥

एके वृक्काभावे पिण्डावादध्यादित्याहुः अनुस्तरणी नित्या चेत् वृक्कापचारो नोपपद्यते। तस्मादनित्येति मन्यामहे। अनुस्तरण्यपचार इति वक्तव्ये वृक्कापचार इति वचनं पिण्डयोर्वृक्काधानस्थाने आधानसिध्यर्थं। तेन पाण्योरिति सिद्धं। अथ किं द्रव्यौ पिण्डौ। अन्नपिण्डावित्येके। सक्तुपिण्डावित्यपरे। उक्तञ्च कात्यायनेन। अथ यदानुस्तरणी नास्ति तदा सक्तुहवींषि तत्स्थाने कुर्यात्। पिण्डग्रहणमुपलक्षणं। तेन वपादिसर्वं पशुना कार्यं सक्तुभिरेव निर्वर्त्तयेदित्येके। अत्र पक्षे वपास्थाने अपूपः। वृक्कस्थाने पिण्डौ। अन्यान्यपि तत्तदङ्गसदृशानि सक्तुभिरेव कार्याणि ॥ २३ ॥

सर्वां यथाङ्गं विनिक्षिप्य चर्मणा प्रच्छाद्येममग्ने चमसं माविजिह्वर इति प्रणीताप्रणयनमनुमन्त्रयते ॥ ॥ २४ ॥

अनुस्तरण्याश्चर्म पृथक्कृत्य सर्वामिति वचनादखण्डितामेव यथाङ्गमिति प्रेतस्य यद्यदङ्गम्पादादि तस्मिंस्तस्मिन्नङ्गे पशोरपि तत्तदङ्ग

यथा भवेत्तथा विनिक्षिप्य तस्या एव चर्मणा प्रच्छाद्य तत इममित्यृचा पूर्णस्रुमसं अनुमन्त्रयेत् यः पूर्वनिहितः ॥ २४ ॥

सव्यं जान्वाच्य दक्षिणाग्नावाज्याहुतीर्जुहुयादग्नये स्वाहा *सोमाय स्वाहा लोकाय स्वाहानुमतये स्वाहेति ॥ २५ ॥

सव्यमिति दक्षिणनिवृत्त्यर्थं। तज्जानु निपात्य दक्षिणाग्नावाज्याहुतीर्जुहुयात् चतुर्भिर्जानुनिपातनमुपस्थोत्थानत्वाविरोधेन कर्त्तव्यं सर्वत्र। न्यग्भावे श्वादिना गृह्यकारेण दोषस्योक्तत्वात्। आज्याहुतिवचनं तन्त्रनिवृत्त्यर्थमिष्यते। होमार्थमन्यः स्रुवः कार्यः। पूर्वस्य योजितत्वात्॥ २५ ॥

पञ्चमीमुरसि प्रेतस्यास्माद्वै त्वमजायथा अयन्त्वदधिजायतामसौ स्वर्गाय लोकाय स्वाहेति ॥ २६ ॥

॥ ३ ॥

प्रेतस्य हृदये पञ्चमीं आहुतिं जुहुयात्। अस्मादितिमन्त्रेण। पञ्चमीमितिवचनं इमामपि जान्वाच्य जुहुयात् इत्येवमर्थं। प्रेतग्रहणमनर्थकं पश्यामः यथा दक्षिणे हस्ते जुहुमित्युक्ते प्रेतस्येति गम्यते प्रेताधिकारादेवमिहापि गम्यतेव। उच्यते। प्रेतग्रहणं सर्वस्यापि प्रेतस्येमाम्पञ्चमीं जुहुयान्नाहिताग्नेरेवेत्येवमर्थं। एतदुक्तं भवति। यस्य यस्य प्रेतस्य स्मृतौ दहनं विहितन्तं तं प्रेतमनेन विधिना

* कामायेति मू० पु०, का० पु०, तथा सो० पु० पाठः।

द्द्येदिति। विशेषस्तूत्तरत्र वक्ष्यामः। असाविलस्य स्थाने प्रेतस्य नाम सम्बुध्या निर्दिशेत्॥ २६ ॥

इति चतुर्थे तृतीया कण्डिका ॥०॥

---

प्रेष्यति युगपदग्नीन् प्रज्वालयतेति॥ १ ॥

अथ। परिकर्मिणः कर्त्ता प्रेष्यति युगपदेव सर्वानग्नीन् प्रज्वालयतेति। ते च तथा कुर्युः। अत्र विज्ञापनमाह ॥ १ ॥

आहवनीयश्चेत् पूर्वं प्राप्नुयात्स्वर्गलोक एनं प्रापदिति विद्याद्राध्स्यत्यसावमुत्रैवमयमस्मिन्निति पुत्रः। ॥ २ ॥

आहवनीयश्चेदाहिताग्निशरीरं प्रथमं प्राप्नुयात् स्वर्गे लोक एनं आहिताग्निं प्रापयेदिति जानीयात्। राध्स्यति वृद्धिमाप्स्यति असावाहिताग्निरमुत्र स्वर्गे। एवमयं पुत्रः अस्मिन् मनुष्यलोके वृद्धिं प्राप्स्यतीति विद्यात्। एवमुत्तरत्रापि योज्यं। अनेनानुष्ठितस्य कर्मणः फलविज्ञानमुक्तं न तु पूर्वप्राप्तेरिदं फलं॥ २ ॥

गार्हपत्यश्चेत् पूर्वं प्राप्नुयादन्तरिक्षलोक एनं प्रापदिति विद्याद्रात्स्यत्यसावमुत्रैवमयमस्मिन्निति पुत्रः ।
॥ ३ ॥

गार्हपत्यस्य पूर्वप्राप्तावाहिताग्निरन्तरिक्षलोकं प्राप्य तत्र रात्स्यति पुत्रस्त्वस्मिन्निति विद्यात् ॥ ३ ॥

दक्षिणाग्निश्चेत् पूर्वं प्राप्नुयान् मनुष्यलोक एनं प्रापदिति विद्याद्रात्स्यत्यसावमुत्रैवमयमस्मिन्निति पुत्रः
॥ ४ ॥

दक्षिणाग्नेः पूर्वप्राप्तौ क्षिप्रमेवोत्पद्य बह्वन्नं प्राप्नोति मनुष्यलोके आहिताग्निः पुत्रश्चास्मिँल्लोके बह्वन्नो भवतीति विद्यात् ॥ ४ ॥

युगपत्प्राप्तौ परामृद्धिं वदन्ति ॥ ५ ॥

यदि सर्वे अग्नयो युगपच्छरीरं प्राप्नुयुस्तदाहिताग्नेर्विशिष्टस्थाने अत्युत्कृष्टामृद्धिं वदन्ति ब्रह्मवादिनः पुत्राणाञ्च अस्मिँल्लोके परामृद्धिं वदन्ति ॥ ५ ॥

तन्दह्यमानमनुमन्त्रयते प्रेहि प्रेहि पथिभिः पूर्व्येभिरिति समानं ॥ ६ ॥

तंग्रहणन्तं प्रति कर्मान्तरमप्यस्तीति ज्ञापनार्थं । तेन प्रेषन्त्वा सिम्वातादिलौकिकं कुर्यात् दह्यमानं प्रेतमनुमन्त्रयते । प्रेहि

प्रेहि पथिभिः पूर्व्यैरिति समानं प्रागुक्तेनानुद्रवणेन प्रेहि प्रेहि पथिभिरिति पञ्चानां तृतीयमुद्धरेत् मैनमग्ने विदहो इति षट्, पूषा त्वेतश्च्यावयतु प्रविद्वानिति चतस्र, उपसर्प चतस्रः, सोम एकेभ्य इति पञ्च, उरूणसावसु तृपेति चतुर्विंशति ऋचः अनुद्रवण उक्ताः अत्रापि तावतीभिरनुमन्त्रयतेत्यर्थः ॥ ६ ॥

**स एवंविदा दह्यमानः सहैव धूमेन स्वर्गं लोकमेतीति ह विज्ञायते ॥ ७ ॥**

प्रशंसेयं। सा च विदुषा कर्म कर्त्तव्यमिति ज्ञापयितुं। न्यायविदश्च ज्ञात्वा चानुष्ठानमित्याहुः ॥ ७ ॥

**उत्तरपुरस्तादाहवनीयस्य जानुमात्रङ्गर्त्तं खात्वा वकांशीपालमित्यवधापयेत्ततो ह वा एष निष्क्रम्य सहैव धूमेन स्वर्गं लोकमेतीति ह विज्ञायते ॥ ८ ॥**

जानुमात्रे गर्त्ते एतावत्कालमातिवाहिकं शरीरमास्थायाहिताग्निः संस्कारं प्रतीक्षते ततोऽस्मिल्लोके दग्धः सन् अवटान्निष्क्रम्य धूमेन सह स्वर्गमेतीति श्रूयते ॥ ८ ॥

**इमे जीवा वि मृतैराववृत्रन्निति सव्यावृतो व्रजन्त्यनवेक्षमाणाः ॥ ९ ॥**

अथ इममित्यृचं कर्त्ता जपित्वा ततः सर्वे सव्यावृतो भूत्वा गच्छेयुः पृष्ठतोनीक्षमाणाः ॥ ९ ॥

**यत्रोदकमवहद्भवति तत्प्राप्य सकृदुन्मज्ज्यैकाञ्जलिमुत्सृज्य तस्य गोत्रं नाम च गृहीत्वोत्तीर्यान्यानि वासांसि परिधाय सकृदेनान्यापीड्योदग्दशानि विसृज्यासत आनक्षत्रदर्शनात् ॥ १० ॥**

ततो यत्रोदकमवहत् स्थिरम्भवति तत्प्रतिगच्छन्ति। तत्प्राप्य सकृन्निमज्जन्ति सकृदवगाहन्त इत्यर्थः। तत एकाञ्जलिं उत्सृजन्ति समानोदकाः, सर्वे एकैकमञ्जलिमुत्सृजेयुरित्यर्थः। पुरुषाः स्त्रियश्च। तस्य गोत्रन्नाम गृहीत्वा प्रेतस्य गोत्रं नाम च गृहीत्वा काश्यपगोत्र देवदत्त एतत्ते उदकमित्येवमुक्त्वा सिञ्चन्ति दक्षिणामुखाः। अयुग्मा दक्षिणामुखा इति स्मृतेः। नियतदेशस्तु स्मृतितोऽवगन्तव्यः। तत उदकादुत्तीर्यान्यानि वासांसि परिदध्युः। ततः सकृदार्द्राणि पीडयन्ति अभ्यासो न कार्यः। तत उदगग्राणि वासांसि विसृजन्ति शोषणार्थं। ततस्तत्रैवासते आनक्षत्रदर्शनात्। ततो नक्षत्रेषु दृश्यमानेषु गृहं प्रविशेयुः सर्वेऽमात्याः॥ १०॥

**आदित्यस्य वादृश्यमाने प्रविशेयुः ॥ ११ ॥**

आदित्यस्य वा दृश्यमाने कस्मिंश्चिन्मण्डले रश्मिवर्जिते प्रविशेरन्। अस्मिन् पक्षे आमण्डलदर्शनादासते ॥ ११ ॥

**कनिष्ठप्रथमा ज्येष्ठजघन्याः ॥ १२ ॥**

प्रविशेयुः। उभयवचनमानुपूर्वीसिध्यर्थं ॥ १२ ॥

प्राप्यागारमश्मानमग्निं गोमयमक्षतांस्तैलमप उप-स्पृशन्ति ॥ १३ ॥

गृहं प्राप्याश्मादीनुपस्पृशन्ति ततः प्रविशेरन् ॥ १३ ॥

नैतस्यां रात्र्यामन्नम्पचेरन् ॥ १४ ॥

एतस्यां रात्र्यां अन्नं न पचेरन्नमात्याः ॥ १४ ॥

क्रीतोत्पन्नेन वा वर्त्तेरन् ॥ १५ ॥

क्रीतेन वा उत्पन्नेन वा वर्त्तेरन्। केचिदेतत्सूत्रं न पठन्ति। ॥ १५ ॥

त्रिरात्रमक्षारलवणाशिनः स्युः ॥ १६ ॥

सर्वेऽमात्याः ॥ १६ ॥

द्वादशरात्रं वा महागुरुषु दानाध्ययने वर्जयेरन्। ॥ १७ ॥

मातापितरौ यश्चोपनीय कृत्स्नं वेदमध्यापयति एते महागुरवः। एतेषु मृतेषु द्वादशरात्रं वा दानाध्ययने वर्जयेरन्। दशाहं वेति वक्ष्यमाणेन सह विकल्पः। नात्राशौचं विधीयते। अपि तु दानाध्ययनवर्जनमात्रं। आशौचन्तु स्मृत्युक्तन्द्रष्टव्यन्दशाहं शावमाशौचमित्यादि ॥ १७ ॥

---

* तिलानिति मुद्रितपु० तथा का० पु० पाठः।

## दशाहं सपिण्डेषु ॥ १८ ॥

मृतेषु दानाध्ययने वर्जयेरन्निति सर्वत्र सम्बन्धनीयं ॥ १८ ॥

## गुरौ चासपिण्डे ॥ १९ ॥

उपनीय कृत्स्नवेदाध्यापके गुरावसपिण्डेऽपि दशाहं द्वादशाहं वेति पूर्वेण सह विकल्पः। मातापित्रोस्तु सपिण्डत्वाद्दशाहं द्वादशाहं वा विकल्पः ॥ १९ ॥

## अप्रत्तासु च स्त्रीषु ॥ २० ॥

दशाहमेव ॥ २० ॥

## त्रिरात्रमितरेष्वाचार्येषु ॥ २१ ॥

एकदेशाध्यापकेष्वित्यर्थः ॥ २१ ॥

## ज्ञातौ चासपिण्डे ॥ २२ ॥

त्रिरात्रमेव समानोदक इत्यर्थः।

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते।

समानोदकभावस्तु जन्मनाम्नोरवेदने ॥ २२ ॥

## प्रत्तासु च स्त्रीषु ॥ २३ ॥

त्रिरात्रमेव ॥ २३ ॥

अदन्तजाते ॥ २४ ॥

त्रिरात्रमेव ॥ २४ ॥

अपरिजाते च ॥ २५ ॥

अपरिजातो नाम असम्पूर्णो गर्भः तत्र च त्रिरात्रमेव ॥ २५ ॥

एकाहं सब्रह्मचारिणि ॥ २६ ॥

सहाध्यायी सब्रह्मचारी तस्मिन् मृते एकाहं वर्जयेत् ॥ २६ ॥

समानग्रामीये च श्रोत्रिये ॥ २७ ॥ ॥ ४ ॥

समानग्रामवासिनि च श्रोत्रिये मृते एकाहं वर्जयेत्। अनाशौचनिमित्तेषु गुर्वादिषु श्रोत्रियपर्यन्तेषु मृतेष्वध्ययनमात्रं वर्जयितव्यं न दानमित्युपदेशः। अत्रान्ये व्याचख्युः त्रिरात्रमक्षारलवणाशिनः स्युः। महागुरुषु तु द्वादशरात्रं वा अक्षारलवणाशिनः स्युर्विकल्पः। दानाध्ययने वर्जयेरन्दशाहं सपिण्डेषु इत्यनेन प्रकरणेनाशौचं विधीयते। *आशौचादिसंक्षेपः। तेन स्मृतेराशौचविस्तारो विज्ञेय इति।

धर्मशास्त्रेषु दाहश्च विहिता चोदकक्रिया।
येषान्तेषान्तु सर्वेषां दाहकर्मेति साधितं ॥
तत्र त्वनाहिताग्न्यादेर्विशेषो वक्ष्यतेऽधुना।

* इत्याशौचसंक्षेपः इति का० पु० पाठः।

द्विगुल्फं बर्हिराज्यञ्चेत्येवमन्तं समभ्यवेत्॥
नास्यानुस्तरणी कार्या पात्राणां योजनं तथा।
पृषदाज्यन्तथा चार्थादिति गृह्यविदां मतं॥
नानाहिताग्नेः पात्राचयो विद्यत इति बैाधायनः।
तान्दिशन्तु नयेदग्निं प्रेतञ्चापि ततः परं।
अयुजो मिथुना वृद्धाः पीठचक्रेण वा नयेत्॥
प्रेतस्य पृष्ठतोऽमात्या ईयुः पूर्ववदेव च।
भूमिभागन्ततः प्राप्य कर्त्ता प्रोचति पूर्ववत्॥
गृह्येणानाहिताग्निन्तु दहेत्पत्नीञ्च पूर्ववत्।
कपालाग्निर्दहेदन्यमुपनीतं तथा परं॥
प्राक् तूपनयनात् प्रेतं लैाकिकाग्निर्दहेन्नरं।
अग्निवर्णं कपालन्तु तप्ता तत्र विनिक्षिपेत्॥
करीषादिततोयोऽग्नेर्जातः स तु कपालजः।
उद्धृतान्ते निधायोऽग्निर्दर्भे तूत्तरपश्चिमे॥
तथा शाखान्तरे दृष्टेः प्रणीताः प्रणयेत्ततः।
खाते हिरण्यशकलन्तिलांश्चापि विनिक्षिपेत्॥
तन्त्रन्नेति पूर्वोक्तमिध्मचित्यादिपूर्ववत्।
पल्युत्थापनपर्यन्तं धनुरन्तमथापि वा॥
ततो हिरण्यशकलैः छिद्राण्यपिदधाति वै।
घृतसिक्तांस्तिलांश्चापि किरेत् प्रेतकलेवरे॥
अथेममग्ने चमसं पूर्णपात्रानुमन्त्रणं।
सव्यं जानु निपात्याथ चतस्रोऽग्नैा जुहोति वै॥

तथाभूतस्य जुहुयात्पञ्चमीं हृदये ततः।
सिग्वातादि ततः कुर्यात्ततोऽर्थं प्राप्तमञ्चितं ॥
ततः प्रज्वालयेदग्निं प्रैषो नात्र भवेदिति।
तं दह्यमानमित्यादि सर्वं पूर्ववदेव तु ॥
अस्थिसञ्चयनादेस्तु सर्वसाम्यान्न कथ्यते ॥ २७ ॥

इति चतुर्थे चतुर्थी कण्डिका ॥ ० ॥

सञ्चयनमूर्ध्वं दशम्याः कृष्णपक्षस्यायुजास्वेकनक्षत्रे ॥ १ ॥

सञ्चीयन्तेऽस्थीनि येन कर्मणा तत्सञ्चयनं। कृष्णपक्षस्य दशम्या ऊर्ध्वमयुजासु तिथिषु एकादशी त्रयोदशी पञ्चदशीत्यासु। एकनक्षत्रे येन नाम्ना एकमेव नक्षत्रमभिधीयते तन्नामके नक्षत्र इत्यर्थः। आषाढाद्वयं फल्गुनीद्वयं प्रोष्ठपदाद्वयमिति षड्भ्योऽन्यत्र नक्षत्रे कर्तव्यमित्यर्थः। अन्तर्दशाहे अतीते वा दशाहे कृष्णपक्षागमनमात्रादङ्काय्यं नातीत एव दशाह इति नियमः। अतीते दशाह इत्ययं पक्षः संवत्सरे सपिण्डीकरणपक्षे एवोपपद्यते द्वादशाहे सपिण्डीकरणपक्षे तु नोपपद्यते सपिण्डीकृतस्य प्रेतस्य पृथक्पिण्डे नियोजनस्य प्रतिषेधात्। यः सपिण्डीकृतं प्रेतं पृथक्पिण्डे नियोजयेत्।

विधिमस्तेन भवति पितृत्वं चोपजायत इति शातातपः। सञ्चित्यै-कोद्दिष्टं विधीयते श्राद्धमस्मै दद्युरिति। तस्मात्तस्मिन् पक्षे द्वितीयेऽहनि चतुर्थेऽहनीत्यादिकालो द्रष्टव्यः॥ १ ॥

**अलक्षणे कुम्भे पुमांसमलक्षणायां स्त्रियमयुजोऽमिथुनाः प्रवयसः॥ २ ॥**

अमङ्गले कुम्भे पुमांसं सञ्चिनुयुः। स्तनरहितः कुम्भः। अलक्षणायां कुम्भ्यां स्त्रियं सञ्चिनुयुः। स्तनवती कुम्भी। अयुज इत्यादि पूर्ववत्॥ २ ॥

**क्षीरोदकेन शमीशाखया त्रिःप्रसव्यमायतनं *परिव्रजन् प्रोक्षति शीतिके शीतिकावतीति॥ ३ ॥**

क्षीरमिश्रोदकेन कर्त्ता प्रोक्षति मन्त्रावृत्तिरुक्ता शेषं व्याख्यातं॥ ३ ॥

**अङ्गुष्ठोपकनिष्ठिकाभ्यामेकैकमस्थ्यसंह्रादयन्तोऽवदध्युः पादौ पूर्वं शिर उत्तरं॥ ४ ॥**

कर्त्ता प्रोक्षति सञ्चेतारोऽङ्गुष्ठोपकनिष्ठिकाभ्यामेकैकमस्थि गृहीत्वाऽसंह्रादयन्तः शब्दो यथा न स्यात्तथा कुम्भेऽवदध्युः। पादौ पूर्वमवदध्युः शिर उत्तरमवदध्युः। उभयवचनमानुपूर्व्यो सिध्यर्थं॥ ४ ॥

* आयतनमिति मुद्रितपु० नास्ति।

**सुसञ्चितं सञ्चित्य पवनेन सम्पूय यत्र सर्वत आपो नाभिः स्यन्देरन्नन्या वर्षाभ्यस्तत्र गर्त्तेऽवदध्युरुपसर्प मातरं भूमिमेतामिति ॥ ५ ॥**

शिरःपर्यन्तं कुम्भेऽवधाय ततो भस्म शूर्पेण संशोध्य सूक्ष्माण्यस्थीनि शिरस उपरि सञ्चित्य ततोऽभित आकाशं इत्यादिलक्षणयुक्ते देशे गर्त्तं खात्वा यत्र गर्त्ते सर्वतोऽपि दिग्भ्योऽधस्तिर्यक् चापो न निष्यन्देरन् वर्षाभ्योऽन्यास्तस्मिन् गर्त्ते कुम्भमवदध्युः उपेत्यृचा मन्त्रकर्त्ता ब्रूयात्। उत्तरांश्च मन्त्रान् कर्त्तैव ब्रूयात् ॥ ५ ॥

**उत्तरया पांसूनवकिरेत् ॥ ६ ॥**

ऊर्द्ध्वञ्च स्वेत्येतया पांसून् प्रक्षिपेत् अवटे। यथा कुम्भं आननपर्यन्तं निमग्नो भवति ॥ ६ ॥

**अवकीर्य्योत्तरां ॥ ७ ॥**

अवकीर्णे गर्त्ते कुम्भाननपर्यन्ते तत ऊर्ध्वञ्च मा नेत्येतां जपेत्। अवकीर्यवचनं पांसुप्रक्षेपो न धर्ममात्रं कार्योपि तु कुम्भाननपर्यन्तं गर्त्तपूरणायालं कर्त्तव्य इत्येवमर्थं ॥ ७ ॥

**उत्ते स्तभ्नामीति कपालेनापिधायाथानवेक्षं प्रत्याव्रज्याप उपस्पृश्य श्राद्धमस्मै दद्युः ॥ ८॥ ॥ ५ ।**

तत उत्तर इत्यृचा घटादिकपालेन कुम्भमपिधाय ततो गर्त-स्यार्थप्राप्तं पूरणं करोति यथा कुम्भो न दृश्यते। कर्मान्तराश्रित्व-ज्ञापनार्थादथशब्दादयमर्थो लब्धः। ततो न वेचं पृष्ठतो नीच-माणः प्रत्याव्रजन्ति। ततोऽप उपस्पृश्य स्नात्वेत्यर्थः। ततोऽस्मिन्नहनि श्राद्धं अस्मै प्रेताय केवलाय दद्युरेकोद्दिष्टविधानेन॥ ८॥

इति चतुर्थे पञ्चमी कण्डिका॥ ०॥

गुरुणाभिमृता अन्यतोवाऽपक्षीयमाणा अमावा-स्यायां शान्तिकर्म कुर्वीरन्॥ १॥

गुरुणा अभिमृताः गुरुर्येषां मृतः अन्यतो वा पुत्रपशुहिरण्या-दिभिरपक्षीयमाणाः सन्तोऽमावास्यायां शान्तिकर्मनाम कुर्युः। तत्र मन्त्रवतीं क्रियां ज्येष्ठः करोति इतरे तूपासते॥ १॥

पुरोदयादग्निं सहभस्मानं सहायतनं दक्षिणा ह-रेयुः क्रव्यादमग्निं प्रहिणोमि दूरमित्यर्धर्चेन॥ २॥

प्रागादित्योदयादग्निं सहभस्मानमायतनेन सह दक्षिणस्यां

दिशि हरेयुः दक्षिणां दिशं प्रति नयेयुरित्यर्थः । क्रव्यादमग्निमित्यर्धर्चेन पचनाग्नेरेवायमुत्सर्गः । गृह्यस्येत्यभ्युपगम्यमानेतिप्रसङ्गः। त्रेताग्नीनामपि प्रसज्येत । अथ तेषां यावज्जीवं धार्यत्वादुत्सर्गानोपपद्यते। तदत्रापि समानं। औपासनोऽपि यावज्जीवं धार्य एव पाणिग्रहणादिगृह्यं परिचरेदिति वचनात्। तस्मात्पचनस्येति सिद्धं। आयतनशब्देन अधिश्रयणार्था मेखलादय उच्यन्ते ॥ २ ॥

तं चतुष्पथे न्युप्य यत्र वा त्रिः प्रसव्यं परियन्ति सव्यैः पाणिभिः सव्यानूरूनाघ्नानाः ॥ ३ ॥

अथ तमग्निं चतुष्पथे प्रक्षिप्य यत्र वा अदक्षिणस्यां वा अचतुष्पथे वा न्युप्य अथ तमग्निमप्रदक्षिणन्त्रिः परियन्ति सव्यैः पाणिभिः सव्यानूरूनाघ्नाना ताड्यमानाः ॥ ३ ॥

अथानवेक्षं प्रत्याव्रज्याप उपस्पृश्य केशश्मश्रुलोमनखानि वापयित्वोपकल्पयीरन्नवान्मणिकान् कुम्भानाचमनीयांश्च शमीसुमनोमालिनः शमीमयमिध्मं शमीमय्यावरणी परिधींश्चानडुहङ्गोमयञ्चर्म च नवनीतमश्मानं च यावत्यो युवतयस्तावन्ति कुशपिञ्जूलानि ॥ ४ ॥

अथानवेक्षं पृष्ठतोनीक्षमाणाः प्रत्याव्रजन्ति । अथ शब्द ऊर्ध्वाहननस्य प्रत्याव्रजनाङ्गत्वाशंङ्कानिवृत्त्यर्थः । ततः सर्वे स्नान्ति । ततः

सर्वं केशादीन् वापयन्ति। पुनरपि स्मृतिप्राप्तं स्नानं कुर्युः। ततो वक्ष्यमाणान्युपकल्पयीरन्। अत्रोपस्कान्दसः। उपकल्पनविधाना-त्पुराणानामुत्सर्गः। अनुक्तोपयोगानां यथार्थमुपयोगः कार्यः। मणिको नाम जलधारणार्थी भाण्डविशेषः। कुम्भा उक्ताः। आचमनीया नाम आचमनसाधना उदञ्चनकमण्डलुप्रभृतयः। शमीसुमनोमालिनः शमीपुष्पमालिनः। मणिकादीन् स्त्रीन्नवा-नुपकल्पयेयुः। शमीसुमनोमालिन इति मणिकादेर्विशेषणमित्येके। कर्तॄणां विशेषणमित्यन्ये। शमीमयमिध्ममुपकल्पयेयुः। प्राकृतस्यायं विकारः। शमीमय्यावरणी चोपकल्पयेत्। अरणी इत्येतावत्युच्य-माने एकेन वाक्येन द्रव्यचोदना गुणचोदना च विधातुन्न शक्यत इति कृत्वा शमीमयग्रहणं नैवाधिक्रियते। अरणी ह्यपूर्वा विधीयते। अतः पुनः शमीमयग्रहणं कृतं परिधींश्चोपकल्पयेरन्। किमर्थमिदमिति न विद्मः। द्रव्यचोदना तावन्न कार्या। इध्मा-बर्हिषोश्च सन्नहनमिति स्थालीपाके इध्मसन्नहनस्य दर्शपूर्ण-मासातिदेशोऽस्ति। इतरेषाञ्च स्थालीपाकातिदेशोऽस्ति। पाक-यज्ञानामेतत्तन्त्रमिति दर्शपूर्णमासयोश्च परिधयो विहिताः। एक-विंशतिमिध्मदारूणि भवन्तीति मन्त्रलिङ्गाच्च। एकविंशतिधास-म्भरामीति। अथ परिधीन् परिदधाति रक्षसामपहत्यै इत्यर्थवा-दाच्च। तस्मादतिदेशादेव सिध्येयुः। शमीमयत्वसिध्यर्थमिति चेत्। तदपि न। इध्मस्तावच्छमीमयोऽत्र विहितः। दर्शपूर्णमासयोश्चेध्म-परिधीनामेकद्रव्यत्वं दृष्टं। पालाशः खादिरो वेध्म इति बौधायनः। तत्र चेध्मग्रहणेनैकविंशतेर्ग्रहणमेकविंशतिमिध्मदारूणीति विधिवाक्ये

श्रवणात्। वृत्तान्तरानुक्तेश्च। अत्र चेध्मग्रहणेन परिधिग्रहणे सति परिधयोऽपि शमीमया एव भवन्ति। इध्मसङ्ख्या चावश्यमतिदेष्टव्यैव। इतरथा सन्नहनमात्रातिदेशेन अरत्निमात्रत्वपालाशत्वादयोऽपि गुणा न स्युरिष्यन्ते च। तर्हि सर्वासामभ्याधानं प्राप्नोतीति शङ्का न कार्या। पञ्चदशेध्मदारूण्यभ्यादधातीति श्रुतेः। इतरेषां च त्रेतावद्विनियोगः कार्यः। तत्र केचित्परिहरन्ति। गुणचोदनैवेयं सा च ज्ञापनार्थं। अन्यत्रेध्मपरिधीनान्नानात्वहत्वं कार्यमिति। रक्षो हननार्थञ्चावश्यं परिधातव्या एवेति। चशब्दः शमीमयत्वसमुच्चयार्थः। उपकल्पनसमुच्चयार्थत्वे सति सर्वत्र चशब्दं कुर्यात्। एवन्ते परिहृतवन्तः। तदयुक्तमित्यन्ये। अस्माकन्त्वे इध्मग्रहणेन पञ्चदशदारुकस्य ग्रहणं दृष्टं। प्राचीनावीतीध्ममुपसमाधाय इध्ममभिघार्येति च एकविंशतिवादिनाप्युभयत्र पञ्चदशत्वमभ्युपगम्यत एव। तत्र स्वशास्त्रदर्शनसामान्यादिध्माबर्हिषोश्च सन्नहनमित्यत्रापि पञ्चदशदारुकस्यैव ग्रहणं। पञ्चदशदारुकस्य सतः सन्नहनाद्यतिदेशेन प्राप्यते। यथा शस्त्रेष्वेव होत्रकाणामभिहिङ्कार इत्यत्र शास्त्रान्तरे होत्रकशब्दस्य सप्तसु त्रिषु वा दृष्टत्वेऽपि अस्मच्छास्त्रे मुख्यवर्जितेषु दृष्ट इति कृत्वा द्वादशापि गृह्यन्ते। स्वशास्त्रदर्शनसामान्यादेवमिहापि स्वशास्त्रदर्शनसामान्यात्पञ्चदशदारुकस्य ग्रहणं। एवञ्च कृत्वा प्रकृतौ पार्वणे परिधयो नैव सम्भवन्ति। तदतिदेशादितरेष्वपि पाकयज्ञेषु नैव सम्भवन्ति। प्रकृतौ परिध्यादीनामाचार्येण विनियोगानुक्तेश्च पञ्चदशदारुकस्यैव ग्रहणं। अथोच्यते। एकविंशतिधा सम्भरामीति सन्नहनमन्त्रे सङ्ख्या श्रूयते। मन्त्रस्यातिदेशा-

त्पाकयज्ञेष्वपि भवति। पञ्चदशकाष्ठत्वे लिङ्गानुपपत्तिः। न चोहः कर्त्तुं शक्यः। न प्रकृतावूहो विद्यत इति न्यायादिति। तदयुक्तं। नह्यस्य मन्त्रस्य स्थालीपाकः प्रकृतिः किन्तर्हि दर्शपूर्णमासौ तस्मादत्रास्योह एव कार्यः। अन्ये तु मन्त्रं नैवेच्छन्ति। अपि चेध्मपरिधीनां नानावृक्षत्वमपि दर्शपूर्णमासयोर्भगवतापस्तम्बेनोक्तं। यच्चूक्तं रक्षोहननार्थं परिधातव्या इति तदप्ययुक्तं पूर्णपात्रेणैव रक्षोहननस्य कृतत्वात्। न चात्र प्रणयनस्य हविःश्रपणार्थमुपपद्यते। आज्यहोमत्वेऽपि दहनकर्मणि प्रणयनदर्शनात्। अपः प्रणयति आपो वै रक्षोघ्नी रक्षसामपहत्यै इति श्रुतेः रक्षोहननार्थत्वं यदुपादीयते तच्चेत् कार्यमन्येन कृतं किमिति तदुपादीयते रक्षोहननञ्च परिधिकार्यं पूर्णपात्रेणैव कृतमिति न परिधय उपादेयाः। अतः सर्वत्र पञ्चदशदारुक एवेध्म इति सिद्धं। अनेनैव चाभिप्रायेणाचार्य्योऽपि पार्वणे परिध्यादीनां विनियोगमनुक्तत्वात्*। बह्वृचानां समाचारश्च सर्वत्रैवमेव। पारम्पर्योपदेशश्चैवमेव। अनेन तु वचनेन परिधयः अपूर्वाः सगुणा विधीयन्ते। तेनात्राप्यूर्ध्वसमिधौ अनुयाजसमिच्च न कार्या विध्यभावात्। नन्वतिदेशप्राप्तेन पूर्णपात्रेणैव अत्र रक्षोहननस्य कृतत्वात् परिधिविधानन्नोपपद्यते इत्याशङ्का न कार्या। नह्यत्र परिधिविधानस्यानेनैव कार्येण भाव्यमित्यत्र किञ्चन प्रमाणमस्ति। विधिभेदात्तस्य कार्यस्येहान्येन कृतत्वाच्च कार्यान्तरं कल्पनीयमित्यलमतिविस्तरेण। आनडुहङ्गोमयं चर्म चोपकल्पयेयुः। नवनीतञ्च अश्मानञ्च यावत्यो युवतयः स्युरष्टे तावन्ति कुशपिञ्जूलानि चोपकल्पयेयुः॥ ४॥

---



* अस्पष्टमनुमीयते।

अग्निवेलायामग्निं जनयेदिहैवायमितरो जातवेदा इत्यर्धर्चेन ॥ ५ ॥

अथाग्निहोत्रविहरणकाले अपराह्णे शमीमयीभ्यामरणीभ्यामग्निं मन्थयेत् अर्धर्चेन। अयञ्चाग्निः पचनो भवति ॥ ५ ॥

तन्दीपयमाना आसत आशान्तरात्रादायुष्मतां कथाः कीर्त्तयन्तो माङ्गल्यानीतिहासपुराणानीत्याख्यापयमानाः ॥ ६ ॥

तं ग्रहण मन्त्रस्योत्तराङ्गलाशङ्कानिवृत्त्यर्थं। आयुष्मताङ्कुलवृद्धानामन्येषाञ्च कथाः कीर्त्तयन्त इतिहासादीनि माङ्गल्यानि ब्रुवन्तः मथितमग्निन्दीपयमानाः गृहाद्बहिरेवासते आशान्तरात्रात्निशि यस्मिन् काले तूष्णीमासते जनास्तच्छान्तरात्रं ॥ ६ ॥

उपरतेषु शब्देषु सम्प्रविष्टेषु वा गृहन्निवेशनं वा दक्षिणद्वारपक्षात्प्रक्रम्याविच्छिन्नामुदकधारां हरेत्तन्तुन्तन्वन्रजसो भानुमन्विहीत्योत्तरस्मात् ॥ ७ ॥

ततो यदा न शब्दाः क्वचिदुच्चरन्ति तदा। उत्तरविवक्षार्थमनुवादोऽयं। सम्प्रविष्टेषु वा अमात्येषु गृहन्निवेशनं वा। किमुक्तं भवति। शान्तरात्रात्प्रागपि यद्यमात्या गृहन्निवेशनं वा प्रवेष्टुं काम-

यन्ते तदा वातेषु प्रविष्टेषु। एवं शान्तरात्रेण सह विकल्पः। निवेशनशब्देनात्र संवेशनमुच्यते। शयनस्थानमित्यर्थः। उपसर्गव्यत्ययो द्रष्टव्यः। उक्तञ्च नैरुक्तैः। निरित्येष समित्येतस्य स्थान इति। तद्वदत्रापि। अनयोरन्यतरे काले कर्त्ता दक्षिणात् द्वारपक्षादारभ्य आउत्तरस्माद्द्वारपक्षात्सन्ततामुदकधारां सिञ्चेत्। तन्तुमित्यृचा॥ ॥ ७ ॥

अथाग्निमुपसमाधाय पश्चादस्यानडुहञ्चर्मास्तीर्य प्राग्ग्रीवमुत्तरलोमः तस्मिन्नमात्यानारोहयेदारोहता-युर्जरसं वृणाना इति॥ ८॥

अथ शब्दोऽस्मिन् कालेऽग्न्यन्तर्मोपासनमुपक्रमादध्यादिति ज्ञापनार्थं। ततः पश्चादस्यानडुहं चर्मास्तीर्येत्यादि व्याख्यातं। ततश्चर्मण्यमात्यानारोहयेदारोहतेत्यृचा। कर्तृवर्जं गृह्याः सर्वे पुमांसः स्त्रियश्चामात्या इत्युच्यन्ते॥ ८॥

इमं जीवेभ्यः परिधिं दधामीति परिधिं परिदध्यात्॥ ९॥

आज्यसंस्कारान्तं कृत्वा इममित्यृचाग्नेः पश्चात्परिधिं परिदध्यात्। ततो दक्षिणतस्तूष्णीन्तत उत्तरतस्तूष्णीमेव। परिधिमित्येकवचनादाद्यस्यैव समन्त्रकत्वमितरौ तूष्णीं॥ ९॥

अन्तर्मृत्युन्दधतां *पर्वतेनेत्यश्मानमित्युत्तरतोऽग्नेः कृत्वा परं मृत्यो अनुपरे हि पन्थामिति चतसृभिः प्रत्यृचं हुत्वा यथाहान्यनुपूर्वं भवन्तीत्यमात्यानीक्षेत ॥ १० ॥

अथ अन्तर्मृत्युमिति पादेन अश्मानमुत्तरतोऽग्नेर्निदधाति ऋचं पादग्रहणे इत्यत्र पादशब्दो मूलवाची। यथा पादः पदिति। तेनात्र पादमात्रस्य ग्रहणं न ऋचः। तत आज्यभागान्तं कृत्वा परं मृत्यो इति चतसृभिः प्रत्यृचं व्याख्यातं। तथा कृत्वा यथेत्यृचामात्यानीक्षेत ॥ १० ॥

युवतयः पृथक् पाणिभ्यां दर्भतरुणकैर्नवनीतेनाङ्गुष्ठोपकनिष्ठिकाभ्यामक्षिणी आज्यपराच्योविसृजेयुः ॥ ११ ॥

अमात्येषु या युवतयः स्त्रियः ता दर्भतरुणकैर्नवनीतं गृहीत्वा तेनाङ्गुष्ठोपकनिष्ठिकाभ्यां पाणिभ्यां अक्षिणी अञ्जते। पृथक्पाणिभ्यामिति वचनं पृथक् पृथक् युगपदेवाञ्जीरन्। न पर्यायेणेत्येवमर्थं। तेन द्वित्वं कुशपिञ्जूलानां नास्त्येव। ततोऽनवेक्षमाणाः पृष्ठतोविसृजेयुः कुशपिञ्जूलानि ॥ ११ ॥

इमा नारीरविधवाः सुपत्नीरित्यञ्जाना ईक्षेत॥ १२॥

इमा इत्यृचा कर्त्ता अञ्जाना युवतीरीक्षेत ॥ १२ ॥

---

* मुद्रितपु॰ अश्मानमिति उत्तरतः पश्चात् पाठः।

अश्मन्वतीरीयते संरभध्वमित्यश्मानङ्कर्त्ता प्रथमो-भिमृशेत् ॥ १३ ॥

तत एतयाश्मानं कर्त्ता पूर्वमभिमृशेत् । प्रथमवचनात्पश्चा-दितरेभिमृशेत् तूष्णीं ॥ १३ ॥

अथापराजितायान्दिश्यवस्थायाग्निनानडुहेन गो-मयेन चाविच्छिन्नया चोदकधारयापोहिष्ठा मयो-भुव इति तृचेन परीमेगामनेषतेति परिक्रामत्सु जपेत् ॥ १४ ॥

अग्निनानडुहेन गोमयेन चाविच्छिन्नया चोदकधारया-पोहिष्ठेति तृचेन स्रिच्यमानयाऽमात्येषु औपासनाग्निं परियत्सु तस्मिन् काले अपराजितायां दिशि स्थित्वा कर्त्ता परीम इत्यृचं जपेत् ॥ १४ ॥

पिङ्गलोनड्वान् परिणेयः स्यादित्युदाहरन्ति ॥ १५ ॥

एवं गुणयुक्तोनड्वान् परिणेतव्यः । अथ स्विष्टकृदादि समापये-त् । उत्तरत्राथशब्दात् ॥ १५ ॥

अथोपविशन्ति यत्राभिरंस्यमाना भवन्त्यहतेन वा-ससा प्रच्छाद्य ॥ १६ ॥

अथोपविशन्ति यत्राभिरंस्यमाना भवन्ति येऽदेशोऽभीष्टस्तत्रा-हतेन वाससा प्रच्छाद्योपविशन्ति ॥ १६ ॥

आसतेऽस्वपन्त आदयात् ॥ १७ ॥

तत्रैव आ उदयादस्वपन्त आसते ॥ १७ ॥

उदित आदित्ये सौर्याणि स्वस्त्ययनानि च जपित्वाऽन्नं संस्कृत्याऽपनः शोशुचदघमिति प्रत्यृचं हुत्वा ब्राह्मणान् भोजयित्वा स्वस्त्ययनं वाचयीत गौः कंसोऽहतं वासश्च दक्षिणा ॥ १८ ॥ ॥ ६ ॥

ततः उदित आदित्ये सौर्याणि स्वस्त्ययनानि च व्याख्यातानि जपित्वा अन्नं संस्कृत्येति वचनमाज्यभागान्तं कृत्वा तत एवान्नात् अपनः शोशुचदघमिति होमः कार्य इत्येवमर्थं। प्रत्यृचं व्याख्यातं। तथा हुत्वा। अन्नस्य तु धानावत्संस्कारः। ततो होमशेषं समाप्य तत एवान्नात् ब्राह्मणान् भोजयित्वा स्वस्त्ययनं वाचयीत। ततो गौः कंसोऽहतं वास इति त्रीणि भुक्तवद्भ्यो दक्षिणां दद्यात्। आदयादित्येव सिद्धे उदित आदित्य इति वचनमध्यापनकालेऽपि सौर्याणि दिवैवाध्येतव्यानि। न कदाचिद्रात्रौ कर्त्तव्यानीत्येवमर्थं। तेन प्रत्यवरोहणे चेत् स्वपन्तमभ्युदियाच्चेदित्यत्र चापरेद्युरुदिते जप इति सिद्धं ॥ १८ ॥

इति चतुर्थे षष्ठी कण्डिका ॥ ० ॥

**अथातः पार्वणे श्राद्धे काम्य आभ्युदयिक एकोद्दिष्टे वा ॥ १ ॥**

अथशब्दोऽधिकारार्थः। इत उत्तरं वक्ष्यमाणो विधिः श्राद्धे वेदितव्य इति। अतः शब्दो हेत्वर्थः। यस्माच्छ्राद्धान्निःश्रेयसप्राप्तिः मूढैरपि च क्रियते तस्माद्वक्ष्याम इति। पार्वणमिति श्राद्धनाम। अन्वर्थसंज्ञा चेयं पर्वणि भवं पार्वणमिति। तथाप्येकस्मिन्नेव पर्वणि भवति। अमावास्यायां। नोभयोः पर्वणोः। कुतः। पिण्डपितृयज्ञेन सह व्यतिषङ्गदर्शनात्। स्मृतेश्च। विप्रश्चन्द्रक्षयेऽग्निमानिति मनुः। अमावास्यायां पितृभ्य इति गौतमः। पितॄनुद्दिश्य यद्दीयते ब्राह्मणेभ्यः श्रद्धया तच्छ्राद्धं। काम्यं श्राद्धं पञ्चम्यां पुत्रकामस्येत्यादि। वृद्धिपूर्त्तनिमित्तमाभ्युदयिकं। एकमेवोद्दिश्य यच्छ्राद्धं श्राद्धमस्मै दद्युः। एकादशाहे एकोद्दिष्टमित्यादि तदेकोद्दिष्टं। धर्मभेदात् पृथगुपदेशः। श्राद्धइत्येतावतैव सिद्धे पार्व्वणादि ग्रहणं धर्मभेदप्रदर्शनार्थं कर्त्तव्यताविध्यर्थञ्च। धर्मभेदमुपरिष्टाद्वक्ष्यामः॥ १ ॥

**ब्राह्मणान् श्रुतशीलवृत्तसम्पन्नानेकेन वा काले ज्ञापितान् स्नातान् कृतपच्छौचानाचान्तानुदङ्मुखान् पितृवदुपवेश्यैकैकमेकैकस्य द्वौ द्वौ चींस्त्रीन्वा वृद्धौ फलभूयस्त्वं न त्वेवैकं सर्वेषां ॥ २ ॥**

ब्राह्मणग्रहणं क्षत्रियवैश्यादिनिवृत्त्यर्थं। श्रुतं स्वाध्यायः शीलं

स्वभावः शमदमादियुक्तत्वं क्रोधरागादिवर्जितत्वं च। वृत्तं विहितकरणं निषिद्धवर्जनं च। एतैस्त्रिभिर्गुणैर्युक्तानेकेन वा गुणेन युक्तानुपवेश्येत्यनेन सबन्धः। काले स्नापितान् स्नत्युक्तनिमन्त्रणकाले निमन्त्रितानित्यर्थः। उक्तं च मनुना।

पूर्वेद्युरपरेद्युर्वा श्राद्धकर्मण्युपस्थिते।

निमन्त्रयीत त्र्यवरान् सम्यग्विप्रान् यथोदितानिति॥

तेषाञ्चैते नियमा भवन्ति।

निमन्त्रितो द्विजः पित्र्ये नियतात्मा भवेत्सदा।

नच छन्दांस्यधीयीत यस्य श्राद्धञ्च तद्भवेत्॥ इति मनुः।

स्नातानिति वचनं नियमेन स्नातान् भोजयेत्। केनचित्कारणेन स्नानाशक्तोऽन्नं भोजयेदित्येवमर्थं। अन्ये स्नातानिति समावृत्तानिति व्याचख्युः। अन्ये स्नानद्रव्यैः स्नातानिति तच्च स्नानं स्वेन द्रव्येण कारयितव्यमिति व्याचख्युः। प्रचाल्य पादौ पाणी चेत्याचमनाङ्गत्वेन विहितं पच्छौचं शुद्धपादस्यानित्यमिति ज्ञापनार्थं कृतपच्छौचवचनं। तेन शुद्धपादत्वेऽप्यत्र नियमेन पच्छौचं कार्यमित्यर्थः। अन्ये तु स्वयमेव तेषां पादान् प्रचालयेदित्येवमर्थमिति व्याचख्युः। आचान्तानिति कर्माङ्गमाचमनं विधीयते। तेन भोजनाङ्गं श्राद्धाङ्गञ्च द्विराचमेयुः। एवं गुणविशिष्टानुदङ्मुखान् पितॄनुपवेशयेत्। उदङ्मुखवचनं प्राङ्मुखत्वनिवृत्त्यर्थं। पितृवदिति वचनं ममैते पितर इत्येवं मनसा ध्यायन् उपवेशयेदित्येवमर्थं इत्येके। अन्ये तु पितुर्वृद्धं पितामहाय वृद्धतरं प्रपितामहाय वृद्धतममित्येवं यथावयउपवेशनार्थमिति। एकैकस्यैकैकमुपवेशयेत्। द्वौ द्वौ त्रींस्त्रीन्वा

अतोऽपि ब्राह्मणा अधिका भवेयुः। सर्वथा ब्राह्मणाधिक्ये फलाधिक्यमस्त्येव। सर्वथाऽल्पकर्मणो महाकर्मणश्च क्वचिदपि समानफलताशङ्का न कार्या। महाकर्मविधानानर्थक्यप्रसङ्गात्। न त्वेवैकं सर्वेषां त्रयाणां भोजयेत्।

द्वौ दैवे पितृकृत्ये त्रीनेकैकमुभयत्र वा।
भोजयेत्सुसमृद्धोऽपि न प्रसज्जेत विस्तरे॥

इति मनुनोक्तस्य एकैकमुभयत्रवेत्यस्य पक्षस्यायं प्रतिषेधः। अस्य प्रतिषेधं कुर्वता मनूक्तमन्यदनुज्ञातं भवति। तेनैतत् सिद्धं भवति। दैवमपि भोजनमत्र कार्यं। तस्य विधिः स्मृतितोऽवगन्तव्यः। आचार्येण तु पित्र्यस्यैव विधिरुच्यते। अस्मदृह्योक्तेति कर्त्तव्यतामात्रमेव कार्यं। न शास्त्रान्तरं दृष्ट्वा विस्तरः कार्यः। मनुरपि।

सत् क्रियां देशकालौ च शौचं ब्राह्मणसम्पदं।
पञ्चैतान्विस्तरो हन्ति तस्मान्नेहेत विस्तरं॥
बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्त्तितं।
तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत्॥ इति गृह्यविदः।
ये स्तेनपतितक्लीबा ये च नास्तिकवृत्तयः।

इत्याद्याश्च वर्ज्या इति॥ २॥

## काममनाद्ये॥ ३॥

आद्यं सपिण्डीकरणं। त्रीनुद्दिश्य क्रियमाणश्राद्धमध्ये तदेव हि प्रथमं। तद्वर्जितेषु सर्वेषु श्राद्धेषु काममन्त्रयाणामेकं भोजयेत्। सपिण्डीकरणे तु नियमेन त्रयाणां त्रिभिर्भाव्यं। काममिति वचन-

मापत्कल्पोऽयमिति ज्ञापनार्थं। अन्ये त्वनाद्ये पार्वणवर्जित इति व्या-चख्युः। तद्यत्र प्रर्थमनिर्दिष्टं। अन्ये त्वनाद्ये अभोजने आमहिरण्ये श्राद्धादाविति। आमैर्वा फलमूलैर्वा प्रदानमात्रं हिरण्येन वा प्रदा-नमात्रं इति बैाधायनः। अन्ये त्वनाद्ये दुर्भिक्ष इति। अन्ये त्वनाद्ये आद्याभावे अन्नाभावे सम्पदभाव इति॥ ३॥

## पिण्डैर्व्याख्यातं॥ ४॥

जीवन्मृतानां पिण्डनिपरणमधिकृत्य ये पक्षाः पिण्डपितृयज्ञे उक्तास्ते श्राद्धेऽपि विज्ञेयाः॥ ४॥

## अपः प्रदाय॥ ५॥

उपवेशनादनन्तरं ब्राह्मणपाणिष्वपो ददाति। आग्नेयीमुखः प्राचीनावीती पितृकर्म कुर्यात्॥ ५॥

## दर्भान् द्विगुणभुग्नानासनं प्रदाय॥ ६॥

ततो दर्भान् द्विगुणभुग्नानासनेषु ददाति। आसनं प्रदायेति सप्तम्यर्थे द्वितीया। आवेशनस्य प्राक् चोदितत्वात्॥ ६॥

## अपः प्रदाय॥ ७॥

ततः पुनरपो ददाति॥ ७॥

तैजसाश्ममयमृण्मयेषु त्रिषु पात्रेष्वेकद्रव्येषु वा दर्भान्तर्हितेष्वपः आसिच्य शन्नो देवीरभिष्टय इत्यनुमन्त्रितासु तिलानावपति तिलोऽसि सोमदेवत्यो गोसवे देवनिर्मितः। प्रत्नवद्भिः प्रत्तः स्वधया पितॄनिमाँल्लोकान् प्रीणयाहि नः स्वधा नम इति ॥ ८ ॥

ततस्तैजसमेकं पात्रं अश्ममयमेकं मृण्मयमेकं एतेषु त्रिषु पात्रेषु। त्रिद्रव्यासम्भवे एकद्रव्येषु वा त्रिषु पात्रेषु। त्रीण्यपि तैजसानि वा त्रीण्यश्ममयानि वा त्रीण्यपि मृण्मयानि वा तान्याग्नेयीदिक्संस्थानि निधाय तेषु दर्भानन्तर्धाय ततस्तेष्वपो निषिच्य ततः शन्नो देवीरित्यृचा पात्रत्रयस्था आपोऽनुमन्त्रयेत्। सकृदेव शक्यत्वान्मन्त्रावृत्तिः। ततस्त्रिषु पात्रेषु तिलानावपति तिलोऽसीति मन्त्रेण प्रतिपात्रं मन्त्रावृत्तिः। पितृशब्दस्योहो नास्तीत्युक्तं प्राक्। ततः पात्रेषु गन्धमाल्याद्यावपेत् ॥ ८ ॥

प्रसव्येन ॥ ९ ॥

पित्र्यङ्कर्म सर्वं प्रसव्येनाप्रदक्षिणेन कार्यमप्रदक्षिणं कार्यमित्यर्थः तृतीया तु प्रकृत्यादित्वात् द्रष्टव्या। समेन धावतीतिवत्। प्रदक्षिणमुपचार इत्याभ्युदयिके अपवाददर्शनाद्योगविभागोऽवगतः॥ ॥ ९ ॥

**इतरपाण्यङ्गुष्ठान्तरेणोपवीतित्वाद्दक्षिणेन वा सव्योपगृहीतेन पितरिदं ते अर्घ्यं पितामहेदं ते अर्घ्यं प्रपितामहेदं ते अर्घ्यमिति ॥ १० ॥**

उत्तरत्रोपवीतयेति विधानात्सर्वमिदं पित्र्यं प्राचीनावीतिना कार्यमित्युक्तं। अधुना उपवीतित्वादिति हेतुनिर्देशादत आरभ्यार्वाग्गन्धमाल्यादिदानाद्यज्ञोपवीतिना कर्म कर्त्तव्यमिति गृह्यविदः। इतरस्य सव्यस्य पाणेरङ्गुष्ठान्तरेणार्घ्यं प्रयच्छेत्। उपवीतित्वाद्धेतोः। पित्र्ये तावत् प्राचीनावीतिना भाव्यमयं चोपवीती तस्मादित्यर्थः। येन पाणिना कर्म करोति दक्षिणेन वा सव्येन वा तस्मिन्नंसे यज्ञोपवीते स्थिते प्राचीनावीती भवति। ततोऽन्यस्मिन्नंसे स्थिते उपवीती भवति। अत्र तूपवीतित्वात् प्राचीनावीतित्वसिध्यर्थं सव्यपाणिपितृतीर्थेन दातव्यमित्यर्थः। अथ वा सव्यपाणेः शिष्टगर्हितत्वाद्दक्षिणं पाणिं सव्येन पाणिना गृहीत्वा दक्षिणेनैव पाणिना उपवीत्येवार्घ्यं प्रयच्छेत्। पित्रादित्रयाणां त्रिभिर्मन्त्रैः यथाक्रमं प्रयच्छेत् ॥ १० ॥

**अपपूर्वं ॥ ११ ॥**

अर्घ्यप्रदानात् पूर्वमन्या अप्पो दद्यादित्यर्थः ॥ ११ ॥

**ताः प्रतिग्राहयिष्यन् सकृत् सकृत्स्वधा अर्घ्या इति ॥ ॥ १२ ॥**

अर्घ्या इति निवेदयेदिति शेषः। ता अर्घ्या आपः प्रतिग्राहयिष्यन् प्रतिग्रहणात् पूर्वं सकृत्सकृदर्घ्या अपो निवेदयेत्। स्वधा अर्घ्या इति मन्त्रेण। पित्रर्थं यावन्तो ब्राह्मणास्तेभ्यः सर्वेभ्यः प्रथममेकमेव पात्रं सकृन्निवेदयेत्। न प्रतिब्राह्मणं। तथा पितामहार्थानां द्वितीयं सकृदेव। प्रपितामहार्थानां तृतीयं सकृदेवेत्येवमर्घं सकृत्सकृदिति वचनं। निवेदनस्य सकृत् नियमादन्यासामपान्दानं अर्घ्यदानञ्च अर्घ्यमन्त्रास्त्र प्रतिब्राह्मणमावर्त्तते। निवेदनान्योदकदानार्घ्यदानेषु पदार्थानुसमयः काण्डानुसमयो वा द्रष्टव्यः। गन्धादिदाने च तथा। एवमेकैकस्यानेकपक्षे। एकैकपक्षे त्वेकैकं पात्रमेकैकस्य निवेद्यान्या अप एकैकस्य दत्वा अर्घ्या अप एकैकस्य दद्यात्। सर्वेषामेकपक्षे त्रीण्यपि पात्राणि तस्यैव निवेद्य पुनः पुनरन्या अपो दत्त्वा तस्यैव त्रिरर्घ्यन्त्रिभिर्मन्त्रैः प्रयच्छेत् ॥ १२ ॥

प्रसृष्टा अनुमन्त्रयेत या दिव्या आपः पृथिवी सम्बभूवुर्या अन्तरिक्ष्या उत पार्थिवीर्याः। हिरण्यवर्णा यज्ञियास्ता न आपः शंस्योना भवन्त्विति संस्रवान्समवनीयताभिरद्भिः पुत्रकामो मुखमनक्ति॥ १३ ॥

ब्राह्मणैः प्रसृष्टा निर्णीता अर्घ्या अपोऽनुमन्त्रयेत् या दिव्या इत्यनेन मन्त्रेण। प्रसृष्टा इत्यादिकर्मणि क्तप्रत्ययः। भूतकालत्वमात्रे आनर्थक्यप्रसङ्गात्। तेन प्रतिब्राह्मणं पृथगनुमन्त्रणं।

अर्घ्यं दत्त्वा दत्त्वा निर्णीतास्तदानीमेवानुमन्त्रयेत्। एवं सर्वेषामर्घ्ये दत्ते संस्रवानर्घ्यशेषान् पात्रगतान् तानेकीकरोति। उत्तरे द्वे पात्रे प्रथमपात्रे आसिञ्चतीत्यर्थः। एवं गृह्यविदः। ततस्ताभिरेकीकृताभिरद्भिः पुत्रकामश्चेन्मुखमनक्ति। न चेन्नानक्ति॥ १३॥

नोद्धरेत्प्रथमं पात्रं पितॄणामर्घ्यपातितं।
आवृत्तास्तत्र तिष्ठन्ति पितरः शौनकोऽब्रवीत्॥१४॥

॥ ७॥

पितॄणामर्घ्यपातितं पितॄणामर्घ्यशेषा आपो यस्मिन् पात्रे एकीकृता एवम्भूतं प्रथमं पात्रं तस्माद्देशान्नोद्धरेत्। समवनयनदेशान्नापनयेदाश्राद्धपरिसमाप्तेः। किमिति नोद्धरेत्। यस्मात् तस्मिन् पात्रे पितरस्तृतीयपात्रेण पिहितास्तिष्ठन्तीति गृह्यज्ञाः तृतीयेन पात्रेण प्रथमपात्रस्यापिधानमिच्छन्ति। अन्ये तु तत्रेति तृतीयार्थे सप्तमी। तेनायमर्थः। आवृत्तास्तेन प्रथमेन पात्रेण पितरस्तिष्ठन्तीति। एतदुक्तं भवति। अर्घ्यपातितं प्रथमं पात्रं न्युब्जं कुर्यात्। तच्च नोद्धरेत् आसमाप्तेरिति व्याचख्युः। शौनकोऽब्रवीत् शौनकएवमवादीत शौनकग्रहणं तस्य पूजार्थं। न विकल्पार्थं॥ १४॥

इति चतुर्थे सप्तमी कण्डिका॥ ७॥

एतस्मिन् काले गन्धमाल्यधूपदीपाच्छादनानां प्रदानं ॥ १ ॥

आच्छादनं वस्त्रं। इदानीं प्राचीनावीती भवेत्। ततो गन्धादीनि पञ्च ब्राह्मणेभ्यो दद्दाति। एतस्मिन् काल इति वचनं एतस्मिन् काले एतान्येव ददातीत्येवमर्थं। तेन गोहिरण्यादीनां श्राद्धान्ते प्राक् स्वधावाचनात् प्रदानं कार्यमिति सिद्धम्।

दत्त्वा तु दक्षिणां शक्त्या स्वधाकारमुदाहरेदिति स्मृतेः॥१॥

उद्धृत्य घृताक्तमन्नमनुज्ञापयत्यग्नौ करिष्ये करवै करवाणीति वा ॥ २ ॥

अनाहिताग्नेः पिण्डपितृयज्ञस्य च पार्वणस्य व्यतिषङ्गो भवति। इध्मोपसमाधानान्तं पिण्डपितृयज्ञं कृत्वा ब्राह्मणपञ्चकोचाद्याच्छादनान्तं पार्वणं कृत्वा ततः पिण्डपितृयज्ञस्थालीपाकादन्नमुद्धृत्य घृताक्तं कृत्वा पित्राद्यर्थान् ब्राह्मणाननुज्ञापयति अग्नौ करिष्ये इति वा अग्नौ करवै इति वा अग्नौ करवाणीति वा॥ २ ॥

प्रत्यभ्यनुज्ञा क्रियतां कुरुष्व कुर्विति ॥ ३ ॥

ब्राह्मणैरेवं प्रत्यभ्यनुज्ञा देया क्रियतामिति वा कुरुष्वेति वा कुरु इति वा। यथा सङ्ख्यं॥ ३ ॥

अथाग्नौ जुहोति यथोक्तं पुरस्तात् ॥ ४ ॥

ततो ऽग्नौ जुहोति उक्तमार्गेण मेक्षणेनावदायावदानसम्पदा जुहुयात् सोमाय पितृमते स्वधा नमोऽग्नये कव्यवाहनाय स्वधा नम इति स्वाहाकारेण वाग्निं पूर्वं यज्ञोपवीती मेक्षणमनुप्रहृत्येति। अथशब्दो होमादर्वाचीनं पिण्डपितृयज्ञाङ्गं पूर्वं कृतमिति ज्ञापनार्थः। तेनानयोर्व्यतिशङ्का लब्धः। अग्नौ वचनमुत्तरविवक्षार्थं ॥ ४ ॥

अभ्यनुज्ञायां पाणिष्वेव वा ॥ ५ ॥

अभ्यनुज्ञायामिति यदि ब्राह्मणाः पाणिषु होममभ्यनुजानन्ति। अग्निकार्यकरत्वं यदि स्वेषामभ्युपगच्छन्तीत्यर्थः। तथा सति पाणिषु जुहोति। अनुज्ञावचनं प्रत्यभ्यनुज्ञावचनञ्च नैव स्तः। कथं तर्ह्यभ्यनुजानन्ति वा न वेति ज्ञातुं शक्यं। उच्यते। यत्र पिण्डपितृयज्ञप्राप्तिरस्ति तत्राग्निप्राप्तिसद्भावात् पाणिहोमं नाभ्यनुजानन्ति। यत्र तु पिण्डपितृयज्ञकल्पप्राप्तिर्नास्ति तत्राग्निप्राप्त्यभावात् पाणिहोममभ्यनुजानन्ति। कथं पुनस्तत्राग्न्यभावः गृह्याणि वक्ष्याम इति हि प्रतिज्ञातं। उच्यते। पाणिमुखाः पितर इति श्रुत्याकर्षादग्निर्निवर्त्तितः। एवञ्च कृत्वा विधिवशेन तेषामभ्यनुज्ञा विज्ञेया न तु प्रतिवचनेनेति सिद्धं। तेनाभ्यनुज्ञायामित्यस्य पिण्डपितृयज्ञकल्पप्राप्त्यभावेनाग्न्यभाव इत्ययमर्थः। ताभ्यामेव मन्त्राभ्यां पाणिषु जुहुयात्। यावन्तो ब्राह्मणाः पित्रादित्रयार्थं उप-

विष्टाश्चेषां सर्वेषां पाणिषु जुहोति। वचनात्। मन्त्रौ च द्वौ। तत्रार्थादेकैकां आहुतिं विगृह्य विगृह्य सर्वेषां दक्षिणपाणिषु जुहोति। शेषाणामनुप्रहरणमर्थाल्लुप्तं। अन्ये तु पाणिनैव जुह्वति। तत्पक्षे सुतरां लुप्तं। अन्ये तु प्रतिब्राह्मणं द्वे द्वे आहुती ताभ्यामेव मन्त्राभ्यां जुह्वति। विग्रहविध्यभावादारम्भसामर्थ्याच्चेति। एवं पाणौ होमः। अस्मिन् पक्षे पिण्डनिपरणकाले ब्राह्मणानां समीपे पिण्डनिर्वपणं भवति। उच्छिष्टसन्निधौ पिण्डान्दद्यादा पितृयज्ञवदिति श्रुतिः। पाणिहोमस्य विषयमुत्तरत्र विस्तरेण विभावयिष्यामः। अनाहिताग्नेः पार्वणे अग्नौ करणमेव। न पाणिहोमः। पाणिहोमं श्रुत्या दृढयति॥ ५॥

अग्निमुखा वै देवाः पाणिमुखाः पितर इति हि ब्राह्मणं॥ ६॥

देवानामग्निमुखत्वादग्नौ होमः। पितॄणां पाणिमुखत्वात्पाणौ होमो युक्त एवेत्यर्थः॥ ६॥

यदि पाणिष्वाचान्तेष्वन्यदन्नमनुदिशति॥ ७॥

अर्थद्वयमत्र विधातुमिष्टमिति गम्यते। तत्राग्नौ हुत्वा भोजनेषु भोजनार्थमन्यदन्नमनुदिशति ददातीत्येकोऽर्थः। यदि पाणिहोमः कृतः तदाचान्तेषु अन्यदन्नं ददातीत्यपरः। आचान्तशब्दे

विप्रतिपन्नाः तत्र केचिदाहुः यदा पाणिषु होमः तदाहुतमन्नं भाजनेषु निधाय अभक्षयित्वैव निष्क्रम्याचामेयुः। आचान्तेष्वन्यदन्नं ददाति। ननु यदि भक्षणं न कृतं तर्ह्याचमने विधिर्न घटते। अशुचित्वाभावादिति चेत्। वयं पृच्छामः। कृतेऽपि भक्षणे किमित्याचमेयुः। अशुचित्वादिति चेत्। अशुचित्वेऽपि किमित्याचमेयुः। वचनादिति चेत्। तदत्राप्यविशिष्टं। अत्रापि हि पाणिहोमनिमित्तमाचमनञ्चोद्यते। न च सर्वमाचमनमशुचित्वनिमित्तं। कर्माङ्गनिमित्तकयोरपि विद्यमानत्वात्। तथाहि पिण्डदानमुक्त्वाह मनुः।

आचम्योदक् परावृत्य त्रिराचम्य शनै रसूनिति।

नैमित्तिकञ्चेदमशुचित्वाभावात्। तद्वदिदमपि नैमित्तिकं। पूर्वंप्राशननिषेधश्च दृश्यते।

अन्नं पाणितले दत्तं पूर्वमश्नन्त्यबुधयः।
पितरस्तेन तृप्यन्ति शेषान्नं न लभन्ति ते॥
यच्च पाणितले दत्तं यच्चान्नमुपकल्पितं।
एकीभावेन भोक्तव्यं पृथक् भावो न विद्यते॥ इति।

ननु सपिण्डीकरणे दृश्यते। हुतशेषं पितृभ्यः पाणिषु ददातीति। तत्रैवायं निषेधः। ददाति चोदितत्वात् तस्य इदन्तु जुहोति चोदितं तस्मान्नास्य निषेध इति चेत्। तत्र ब्रूमः। दत्तशब्देन विधितोयत्पाणौ निहितं अन्नन्तदुच्यते। एवमुदीच्या आहुः। भाष्यकारास्त्वेतन्नेच्छन्ति। चमुभक्षणे। आचान्तेष्विति भक्षितेष्वित्यर्थः। पाणिषु हुतश्चेत्तेष्वन्नेषु प्राशितेष्वन्यदन्यं ददाति न तयो-

र्भिन्नीभावः कार्यः अथाग्नौ करणपक्षे। अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत्। योह्यग्निः स द्विजो विप्रैर्मन्त्रदर्शिभिरुच्यत इति हि मनुनाग्निसाम्यं दर्शितं। तत्र प्राशितेष्वाचमनं न कार्यं। अग्नितुल्यत्वदर्शनात्। प्रयोगान्तरस्य च तद्विषयस्याविधानात्। केचित्त्वङ्गुष्ठनिवेशनादिप्रयोगान्तरं कुर्वन्ति तत्पक्षे आचमनं कार्यं न वेति चिन्त्यं। अन्नं पाणितले दत्तमित्ययं निषेधः सपिण्डीकरण एव। तस्य ददाति चोदितत्वात्। अस्य न भवति जुहोति चोदितत्वात्तच्छब्दचोदितस्यैव च तद्ग्रहणं युक्तं तस्यैव प्रथमं सम्प्रत्ययादिति। अत्र युक्तं ज्ञात्वा कार्यं॥ ७॥

अन्नमन्ने॥ ८॥

कृतशेषमन्नं भोजनार्थेषु पात्रेषु निहितेष्वन्नेषु ददाति अग्निहोमे पाणिहोमे च समानमिदं॥ ८॥

सृष्टं दत्तमभुक्तमिति॥ ९॥

सृष्टं प्रभूतन्दत्तं अभुक्तं अद्धिकरणशीलं। इति शब्दोहेत्वर्थः। तस्मात्प्रभूतमन्नं देयमिति भोजनस्य पर्याप्तमात्रं न देयं। ततोऽप्यधिकं देयं यथोच्छिष्येतेत्यर्थः॥ ९॥

तृप्तान् ज्ञात्वा मधुमतीः श्रावयेदक्षन्नमीमदन्तेति च॥ १०॥

मधुवाता इति तिस्रो मधुमत्य इति प्रसिद्धाः। अन्नादिनिवृत्तेच्छाम् ज्ञात्वा ततो मधुमतीति तिस्रोऽचन्नित्येकां श्रावयेत्। हुतेषु श्रावयेदित्येव वक्तव्ये ज्ञात्वेति वचनं ज्ञात्वैताः श्रावयेत् पूर्वन्तु भोजनकाले अन्याः श्रावयेदित्येवमर्थं। मनुनाप्युक्तं।

स्वाध्यायं श्रावयेत्पित्र्ये धर्मशास्त्राणि चैवहि।
आख्यातानीतिहासांश्च पुराणानि खिलानि चेति॥ १०॥

**सम्पन्नमिति पृष्ट्वा यद्यदन्नमुपयुक्तं तत्तत्स्थालीपाकेन सह पिण्डार्थमुद्धृत्य शेषं निवेदयेत्॥ ११॥**

अथ सम्पन्नमित्यनेन वाक्येन ब्राह्मणान् पृच्छति ते च सम्पन्नमिति प्रत्यूचुः। ततोयद्यदन्नमुपयुक्तं तस्मात् तस्मादन्नादुद्धरन्ति पिण्डार्थं। तत्तत्स्थालीपाकेन सहैकीकरोति अन्नप्रकीरणार्थञ्चार्थादस्मिन्नेव काले सर्वस्माद्भुक्तशेषादुद्धरति। ततो भुक्तोद्धृतशेषं निवेदयेत् ब्राह्मणेभ्यः। इदं शिष्टं किमनेन कर्त्तव्यमिति। स्थालीपाकेन सहेति नात्रापूर्वः स्थालीपाकश्चोद्यते। सर्वश्राद्धेषु प्रसङ्गात्। अनिष्टञ्चैतत्। तेनानुवाद एवायं। तेन यत्र स्थालीपाको विहितस्तत्र तेन भुक्तशेषेण च पिण्डनिपरणं भवति। यत्र तु स्थालीपाकविधिर्नास्ति तत्र भुक्तशेषेणैव केवलेन निपरणं भवति। आचार्येणाष्टौ श्राद्धान्युक्तानि।

अन्वष्टक्यञ्च पूर्वेद्युर्मासि मासि च पार्वणं।
काम्यमभ्युदयेष्टम्यां एकोद्दिष्टमथाष्टमं॥

तत्र पूर्वेषु चतुर्षु स्थालीपाकादुद्धृत्याग्नौ करणं। अग्निसमीपे स्थालीपाकेन भुक्तशेषेण च पिण्डनिपरणं। पिण्डपितृयज्ञकल्पस्य तेषु विद्यमानत्वात्। तच साधितमेव प्राक्। उत्तरेषु चतुर्षु भोजनार्थाद्न्नादुद्धृत्य घृताक्तं कृत्वा पाणिहोमः। ब्राह्मणसमीपे भुक्तशेषमात्रेण पिण्डनिपरणं। तेषु स्थालीपाकविध्यभावात् पिण्डपितृयज्ञकल्पप्राप्त्यभावाच्च। तत्रार्थाल्लेखा च तदभ्युक्षणं च सकृदाच्छिन्नावस्तरणं च लेखा त्रिरुदकेनेत्यादिपत्नीप्राशनान्तं भवति। अग्निं प्रत्येयादिति तु न भवति अन्यथातिप्रणयनादि सर्वं न भवति।॥ ११ ॥

## अभिमतेऽनुमते वा भुक्तवत्स्वनाचान्तेषु पिण्डान्निदध्यात् ॥ १२ ॥

शेषं निवेदितं ब्राह्मणैर्यद्यभिमतं स्वीकर्त्तुं अभिप्रेतं तदा तेभ्यो दद्यात्। अथ यद्यनुमतं मनुज्ञातं दृष्टैः सहोपभुज्यतामिति तदा स्वीकृत्य ज्ञातिभिर्बान्धवैश्च सहोपभुञ्जीत। मनुरपि।

ज्ञातिभ्यः सत्कृतन्दत्वा बान्धवानपि पूजयेत्। इति।

ततो अनाचान्तेषु पिण्डान्निदध्यात् पूर्वोक्तविधिना। अनाचान्तेष्वित्येव सिद्धे भुक्तवत्स्विति वचनं भुक्तवत्स्वेव निदध्यात्। न पूर्वमित्येवमर्थं। मनुना भोजनात् पूर्वं निपरणं विहितं तन्न कार्यमिति। अतो ज्ञायते। अन्यस्य मनुप्रोक्तस्याविरुद्धस्याङ्गस्येच्छातः करणमिति॥ १२ ॥

## आचान्तेष्वेके ॥ १३ ॥

आचान्तेषु निपरणमेके इच्छन्ति ॥ १३ ॥

प्रकीर्यान्नमुपवीयों स्वधोच्यतामिति विसृजेत् ॥
॥ १४ ॥

आचमनोत्तरकालमुच्छिष्टानां समीपेषु अन्नं प्रकिरेत्। अनाचान्तेषु पिण्डदानपक्षेऽपि पिण्डन्दत्वा तत उच्छिष्टानां समीपे अन्नं प्रकिरेत्। मनुरपि।

सार्ववर्णिकमन्नाद्यमानीयाप्लाव्य वारिणा।
समुत्सृजेद्भुक्तवतामग्रतोविकिरन् भुवि इति ॥

अधुना प्रथमं पात्रं विवृणुयात्। तत उपवीय यज्ञोपवीती भूत्वेत्यर्थः। मनुरपि।

उद्धृते दक्षिणे पाणावुपवीत्युच्यते बुधैः।
सव्ये प्राचीनमावीती निवीती कण्ठसज्जन इति।

ततो दक्षिणां दत्वा ॐ स्वधोच्यतामिति ब्राह्मणान्विसृजेत्। अतिसृजेत्। अनुजानीयादुत्थापयेदित्यर्थः। ते च ॐ स्वधेति प्रत्यूचुः॥ १४ ॥

अस्तु स्वधेति वा ॥ १५ ॥ ॥ ८ ॥

अस्तु स्वधेति वा विसृजेत्। तथा सति ते च अस्तु स्वधेति प्रत्यूचुः।

विसृज्य ब्राह्मणांस्तांस्तु नियतो वाग्यतः शुचिः।
दक्षिणान्दिशमाकाङ्क्षन्याचेतेमान्वरान् पितॄन् ॥

दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च।
श्रद्धा च नो माव्यगमद्बहुधेयञ्च नोऽस्त्विति॥
उच्छेषणन्तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः।
ततो गृहबलिं दद्यादिति धर्मो व्यवस्थित इति मनुः।

अष्टौ श्राद्धानीत्युक्तं। तत्रान्वष्टक्यञ्च पूर्वेद्युश्च मासि मासि चेति श्राद्धत्रयं द्वितीयेऽध्याये व्यक्तीकृतं। पार्वणञ्चानाहिताग्नेर्व्यक्तीकृतमेव। आहिताग्निस्तु पिण्डपितृयज्ञं समाप्य ततः पार्वणं करोति। पितृयज्ञन्तु निर्वर्त्येति मनुः। तत्र पाणिहोमः। ब्राह्मणसमीपे भुक्तशेषमात्रेण पिण्डदानञ्च। काम्ये च पाणिहोमः। भुक्तशेषमात्रेण पिण्डदानञ्चास्त्येव। मासिश्राद्धस्य पार्वणस्य च एककार्यत्वादन्यतरेणैवालमित्युक्तं। तत्र मासिश्राद्धं कृतवांश्चेत्पर्वणि केवलं पिण्डपितृयज्ञः कार्य एव। काम्यश्राद्धं कृतञ्चेत्तेनैवालं न पुनर्मासिश्राद्धं पार्वणश्राद्धे कार्ये। काम्यश्रुतिस्तु तिथिविशेषमपेक्ष्य चरितार्था न पुनरावर्त्तयितुं शक्नोति। अग्निहोत्रद्रव्यवत्। आभ्युदयिके तु युग्मा ब्राह्मणा अमूला दर्भाः। प्राङ्मुखोपवीती स्यात् प्रदक्षिणमुपचारो यवैस्तिलार्थो गन्धादिदानं द्विर्द्विः ऋजुदर्भानासने दद्यात्। यवोऽसि सोमदेवत्यो गोसवे देवनिर्मितः। प्रत्नवद्भिः प्रत्तः पुष्ट्या नान्दीमुखान् पितॄन्निमांल्लोकान् प्रीणयाहि नः स्वाहेति यवावपनं। नान्दीमुखाः पितरः प्रीयन्तामित्यर्घ्यनिवेदनं यथालिङ्गं नान्दीमुखाः पितरः इदं वो अर्घ्यमित्यर्घ्यप्रदानं मन्त्रो यथालिङ्गं। अग्नये कव्यवाहनाय स्वाहा। सोमाय पितृमते स्वाहेति होम-

मन्त्रौ। मधुवाता इति हचस्य स्थाने उपास्मै गायतेति पञ्च मधुमतीः श्रावयेत्। अक्षन्नमीमदन्तेति षष्ठीं। आचान्तेषु भुक्ताशयान् गोमयेनोपलिप्य तेषु प्राचीनाग्रान् दर्भानास्तीर्य्य तेषु पृषदाज्यमिश्रेषु भुक्तशेषेणैकैकस्य द्वौ द्वौ पिण्डौ दद्यात्तेनैव क्रमेण मन्त्रावृत्तिरुक्ता। अन्ये तु नान्दीमुखेभ्यः पितृभ्यः स्वाहेति एवं यथालिङ्गं पिण्डान्निपृणन्ति। सर्पिषि दध्यानयति एतदेवं पृषदाज्यं अनुमन्त्रणादि पूर्ववत्। अन्ये त्वनुमन्त्रणादि नेच्छन्ति। ॐ स्वधोच्यतामित्यस्य स्थाने उपसम्पन्नमिति शेषं पूर्ववत्। अष्टमीश्राद्धं काम्यवत्। एकोद्दिष्टे त्वेको विप्र एकमर्घ्यपात्रं न दैवं न धूपो न दीपो न स्वधाशब्दो न पितृशब्दो न नमःशब्दः तिलोऽसीति मन्त्रस्योहः तूष्णीं वा तिलावपनं अर्घ्यं निवेदनं तूष्णीं अर्घ्ये दत्ते तत्पात्रं न्युब्जं करोति। भोजनार्थादन्नादुद्धृत्य घृताक्तं कृत्वा अमुष्मै स्वाहेति पाणिहोमः। अमुष्मैशब्दस्य स्थाने प्रेतनाम वाच्यं। नाभिश्रावणं भुक्तशेषमात्रेणैकं पिण्डन्निपृणीयात्। तस्य गोत्रं नाम गृहीत्वा निनयनमन्त्रस्योहः। अनुमन्त्रणादि सर्वं समन्त्रकं भवति पत्नीप्राशनन्तु नास्ति। अभिरम्यतामिति विसर्जनं एवं नवश्राद्धवर्जितेषु एकोद्दिष्टेषु। नवश्राद्धेषु तु एकोद्दिष्टेषु सर्वममन्त्रकं भवति। नवश्राद्धममन्त्रकमिति वचनात्। दशाहेषु यानि श्राद्धानि तानि नवश्राद्धानि। नवश्राद्धं दशाहानीति वचनात्। यत्र यत्रास्माभिः पाणिहोम उक्तः तत्र सर्वत्र भाष्यकारः पिण्डदानं नेच्छति। स्थालीपाकेन सह भुक्तशेषेण पिण्डदानञ्चोद्यते तत्र च स्थालीपाकाभावादिति। ये तु पिण्डदानमिच्छन्ति त एवमाहुः। स्थालीपाकेन

सह पिण्डदानं कार्यं न पृथक् स्थालीपाकेन भुक्तशेषेण चेत्ययमर्थः। न तु यत्र स्थालीपाकस्तत्रैव पिण्डदानं कार्यमिति। तेन तेष्वपि केवलेन भुक्तशेषेण पिण्डदानं कार्यमिति॥१५॥

इति चतुर्थे अष्टमी कण्डिका॥०॥

## अथ शूलगवः॥ १ ॥

उक्तोऽर्थः। शूलगव इति कर्मनाम स वक्ष्यते। शूलोऽस्यास्तीति शूलः। अर्श आदिभ्योऽच्। शूलीत्यर्थः। शूलते रुद्राय गोपशुना यागः। स शूलगवः॥ १ ॥

## शरदि वसन्ते वार्द्रया॥ २ ॥

शरदि वसन्ते वा ऋतौ आर्द्रानक्षत्रेण स कार्यः॥ २ ॥

## श्रेष्ठं स्वस्य यूथस्य॥ ३ ॥

स्वस्य यूथस्य श्रेष्ठं कायेन अभिषिञ्चेत्यनेन सबन्धः॥ ३ ॥

अकुष्ठिपृषत् ॥ ४ ॥

स च पशुः अकुष्ठिपृषत्कार्यः । कुष्ठी च पृषच्च न ग्राह्य इत्यर्थः । पृषद्वर्णो लोहितः शुक्लबिन्दुभिः संयुक्तः ॥ ४ ॥

कल्माषमित्येके ॥ ५ ॥

कल्माषं गृह्णीयादित्येके आहुः । कल्माषो नाम कृष्णबिन्दुचितः ॥ ५ ॥

कामं कृष्णमालोहवांश्चेत् ॥ ६ ॥

कामं कृष्णं गृह्णीयादालोहवांश्चेद्भवति जम्बूसदृश इत्यर्थः ॥ ॥ ६ ॥

व्रीहियवमतीभिरद्भिरभिषिच्य ॥ ७ ॥

एवं गुणयुक्तं पशुं अस्मात्कर्मणः पूर्वमेव व्रीहियवमतीभिरद्भिरभिषिञ्चति स्नपयति स्वयमेव ॥ ७ ॥

शिरस्त आभसत्तः ॥ ८ ॥

शिरस्त उपरि प्रारभ्य आभसत्तः आपुच्छप्रदेशात् ॥ ८ ॥

रुद्राय महादेवाय जुष्टो वर्धस्वेति ॥ ९ ॥

रुद्रायेति मन्त्रेण तत उत्कृष्टो वर्धते पशुर्यावदुत्पन्नदन्तो भवति सेचनसमर्थो वा भवति ॥ ९ ॥

तं वर्धयेत् सम्पन्नदन्तमृषभं वा ॥ १० ॥

तं पशुमेवमवश्यं वर्धयेत् ततोऽन्यतरस्यामवस्थायां कर्म कुर्याद्वक्ष्यमाणं ॥ १० ॥

यज्ञियायां दिशि ॥ ११ ॥

ग्रामाद्बहिः प्राच्यामुदीच्यां वा दिशि कार्यमित्यर्थः ॥ ११ ॥

असन्दर्शने ग्रामात् ॥ १२ ॥

यत्रस्थं ग्रामो न पश्यति यत्रस्थो वा ग्रामं न पश्यति तत्र देशे कार्यं इत्यर्थः ॥ १२ ॥

ऊर्द्ध्वमर्धरात्रात्। उदित इत्येके ॥ १३ ॥

अनयोरन्यतरस्मिन् काले कुर्यात् ॥ १३ ॥

विद्यं चरित्रवन्तं ब्राह्मणमुपवेश्य सपलाशामार्द्रशाखां यूपं निखाय व्रतत्यौ कुशरज्जू वा रशने अन्यतरया यूपं परिवीयान्यतरयार्धशिरसि पशुं बध्वा यूपे रशनायां वा नियुनक्ति यस्मै नमस्तस्मै त्वा जुष्टं नियुनज्मीति ॥ १४ ॥

शूलगवं यो वेत्ति असौ वैद्यः यः स्वयं कृतवानसौ चरित्रवान्। अस्मिन् कर्मण्येवंगुणं ब्राह्मणं उपवेशयेत्। आज्यभागान्तं कृत्वा अथ शामित्रस्यायतनङ्करोति। ततः सपलाशामार्द्रशाखां यूपं यूपार्थं पुरस्तादग्नेर्निखनति। तचणं न भवति। शाखामिति वचनात्। सा च यूपप्रमाणा ग्राह्या। प्रतत्यौ कुशरज्जू वा रशने भवतः। प्रतती वल्ली पलाशविशेषः। रशने अन्यतरयेति विवृत्या पाठः कर्त्तव्यः। प्रगृह्यत्वात्। तयोरन्यतरया रशनया यूपं परिवीय परिवेष्ट्य अन्यतरया रशनया अर्धशिरसि शृङ्गमध्ये दक्षिणं शृङ्गं यथाबद्धं भवति तथा पशुं बद्ध्वा यूपे तत्परिवीतायां रशनायां वा निबध्नाति प्रत्यङ्मुखं यस्मै नम इति मन्त्रेण। यूपादयो विशेषा अस्मिन्नेव पशौ भवन्ति न पश्वन्तरे। कुतः। पशुकल्पेति विध्यभावात्॥ १४॥

## प्रोक्षणादिसमानं पशुना विशेषान् वक्ष्यामः॥ १५॥

प्रोक्षणादिवचनं प्रोक्षणात् प्राक्तनस्य पशुकल्पविहितस्य निवृत्त्यर्थं। पशुना पशुकल्पेन समानं विशेषमात्रं वक्ष्यामः॥ १५॥

## पात्र्या पलाशेन वा वपां जुहुयादिति ह विज्ञायते॥ ॥ १६॥

पात्री दारुमयी। पलाशं पर्णं। वपाहोमकाले पात्र्या पलाशेन वा वपां जुहुयात्। जुह्वापवादः। श्रुत्याकर्ष उत्पन्नश्रुतिमूलत्वदर्शनार्थमित्युक्तं सर्वत्र स्मर्त्तव्यं॥ १६॥

त्रयाणामपि प्रदानानां होममन्त्रमाह।

हराय *मृडाय शर्वाय शिवाय भवाय महादेवायोग्राय भीमाय पशुपतये रुद्राय शङ्करायेशानाय स्वाहेति ॥ १७ ॥

द्वादशनामको मन्त्रः ॥ १७ ॥

षड्भिर्वोत्तरैः ॥ १८ ॥

उग्रायेत्यादिषट्नामको वा मन्त्रो भवेदित्यर्थः ॥ १८ ॥ •

रुद्राय स्वाहेति वा ॥ १९ ॥

अयमेकनामको वा भवेदित्यर्थः ॥ १९ ॥

चतसृषु चतसृषु कुशसूनासु चतसृषु दिक्षु बलिं हरेद्यास्ते रुद्र पूर्वस्यां दिशि सेनास्ताभ्य एतं नमस्ते अस्तु मा मा हिंसीरित्येवं प्रतिदिशं त्वादेशनं ॥ २० ॥

वपास्थालीपाकावदानहोमपर्यन्तं कृत्वा स्विष्टकृतः प्रागेकैकस्यां दिशि चतस्रश्चतस्रः कुशसूना निधाय तासु चरुशेषेण मांसशेषेण च बलिं हरेत्। यास्ते रुद्र पूर्वस्यां दिशीति प्रतिदिशं त्वादेशनङ्कार्यं यास्ते रुद्र दक्षिणस्यां दिशि यास्ते रुद्र प्रतीच्यां दिशि यास्ते रुद्रोदीच्यां दिशीति। दर्भस्तम्बैस्तृणैश्च कल्पवद्ग्रथित्वा सर्वेषामग्रं गृहीत्वा एकीकृत्य ग्रथिताः कुशसूना उच्यन्ते ॥ २० ॥

---

* मृदाय इति मुद्रितपु० पाठः।

चतुर्भिः सूक्तैश्चतस्रो दिश उपतिष्ठेत कद्रुद्रायेमा रुद्रायाते पितरि मा रुद्राय स्थिरधन्वन इति ॥ २१ ॥

चतुर्भिर्यथाक्रमेण चतस्रो दिश उपतिष्ठेत । सूक्तग्रहणङ्कद्रुद्रायेत्यस्मिन् सूक्ते अस्मे सोमश्रियमधीत्यादिना रौद्राणां निवृत्त्यर्थं ॥ ॥ २१ ॥

सर्वरुद्रयज्ञेषु दिशामुपस्थानं ॥ २२ ॥

एतच्च दिशामुपस्थानं सर्वरुद्रयज्ञेषु भवतीत्यर्थः । एतमेव देवमध्ये गोष्ठस्य यजेतेति । रौद्रङ्गवेधुकन्निर्वपेदित्यादिषु च विज्ञेयं ॥ २२ ॥

तुषान् फलीकरणांश्च पुच्छञ्चर्मशिरः पादानित्यग्नावनुप्रहरेत् ॥ २३ ॥

स्थालीपाकव्रीहीणां ये तुषाः फलीकरणाश्च । फलीकरणानाम सूक्ष्मकणाः तांश्च पुच्छादीनि च अग्नावनुप्रहरेत् ॥ २३ ॥

भोगं चर्मणा कुर्वीतेति शांवत्यः ॥ २४ ॥

शांवत्यस्त्वाचार्यः कर्मणा भोगमुपानदादि कुर्वीतेति मन्यते ॥ ॥ २४ ॥

उत्तरतोऽग्नेर्दर्भवीतासु कुशसूनासु वा शोणितं निनयेच्छ्वासिनीर्घोषिणीर्विचिन्वतीः समश्नुतीः सर्पा एतद्वोऽत्र तद्धरध्वमिति ॥ २५ ॥

अङ्गावदानसमये केनचित्पात्रेण शोणितं गृह्णीयात् तदिदानीमुत्तरतोऽग्नेः दर्भवीतास्विति दर्भराजिषु कुशसूनासु वा शोणितं निनयेत् श्वासिनीरिति मन्त्रेण ॥ २५ ॥

अथोदङ्ङावृत्य श्वासिनीर्घोषिणीर्विचिन्वतीः समश्नुतीः सर्पा एतद्वोऽत्र तद्धरध्वमिति सर्पेभ्यो यत्तत्रासृगूवध्यं वावस्रुतं भवति तद्धरन्ति सर्पाः ॥ २६ ॥

अथ तत्रस्थ एव उदङ्मुख आवृत्य यत्तत्र संज्ञपनदेशे रुधिरं ऊवध्यं वा उवध्यगोहं वा अवस्रुतं भूमौ निपतितं भवति तत्सर्पेभ्य उद्दिशति श्वासिनीरिति मन्त्रेण। तच्च सर्पा हरन्ति देवतारूपेण। ततः स्विष्टकदादिहृदयशूलोद्वासनसहितं होमशेषं समापयेत्। अथास्य रुद्रदेवस्य यष्टा स्तोतृप्रियस्य वै। सर्वात्मनो भगवतो माहात्म्यमधुनाब्रवीत् ॥ २६ ॥

सर्वाणि ह वा अस्य नामधेयानि ॥ २७ ॥

यावन्ति किल लोके नामधेयानि अभिधानानि सन्ति तानि सर्वाणि अस्यैव नामधेयानि यावन्तो लोके शब्दाः सन्ति तैः सर्व-

रयमेव वाच्य इत्यर्थः। त्रैलोक्ये यावन्तः पदार्थास्ते सर्वे रुद्र-एवेत्यर्थः। एवं ब्रुवता रुद्रस्य सर्वगतत्वं दर्शितं ॥ २७ ॥

## सर्वाः सेनाः ॥ २८ ॥

त्रैलोक्ये यावन्त्यः सेनाः सन्ति ताः सर्वाः अस्यैव सेनाः नह्य-न्यस्याल्पभाग्यस्य सेनाः सम्भवन्ति। अस्य तु महाभाग्यादुपपद्यन्त-एव। एवं ब्रुवता राजादयो देवादयश्च रुद्र इत्युक्तं भवति। स्तुतिषु च न पुनरुक्ततादोषः॥ २८ ॥

## सर्वाण्युच्छ्रयणानि ॥ २९ ॥

यावन्ति च लोके उच्छ्रयणानि उत्कृष्टानि भूतानि विद्व-त्तया यष्टृतया श्रोतृतया श्रापयितृतया दातृतया तपस्तप्तृतया अन्येन वा तानि सर्वाण्यस्यैव अंशभूतानि। न ह्यन्यस्योत्कृष्टत्व-सम्भवः। अथवा सर्वाण्युच्छ्रयमाणानि पर्वतादीनि तान्यस्यैव तेष्वयं वसतीत्यर्थः। एवमनेकधा स्तुतवानाचार्यः॥ २९ ॥

## इत्येवंविद्यजमानं प्रीणाति ॥ ३० ॥

इतिशब्द उक्तपरामर्शी। उक्तेन मार्गेण यो रुद्रं एवं विदि-त्वा यजति शूलगवेन यजमानस्तमित्येवंविद्यजमानं प्रीणाति रुद्र-देवः। अत्युत्कृष्टेन सुखेन यजमानं संयुनक्तीत्यर्थः ॥ ३० ॥

## नास्य ब्रुवाणं च न हिनस्तीति विज्ञायते ॥ ३१ ॥

अस्य कर्म्मणः ब्रुवाणं वक्तारञ्च नेत्यपिशब्दार्थः । तेन वक्तारमपि विज्ञातारमपि अध्येतारमपि उपकर्त्तारमपि न हिनस्ति रुद्रदेव इत्येवं श्रूयते ॥ ३१ ॥

नास्य प्राश्नीयात् ॥ ३२ ॥

अस्य पशोः हुतशेषं न प्राश्नीयात् । अन्यत्र इच्छातः प्राश्नीयात् वा । अयं निषेध एकेषां मतेन कृतः उत्तरत्र प्राशनविधानात् । ॥ ३२ ॥

नास्य ग्राममाहरेयुरभिमारुको ह्येष देवः प्रजा भवतीति ॥ ३३ ॥

अस्य कर्मणः सम्बन्धीनि द्रव्याणि ग्रामं नाहरेयुः केचिदपि । प्रजा अभिमारुको ह एष देवो भवति । आहरणे सत्याहृतवतीः प्रजा हिनस्ति रुद्रदेवः । इति शब्दो हेतौ । तस्मान्नाहरेयुरिति ॥ ३३ ॥

अमात्यानन्ततः प्रतिषेधयेत् ॥ ३४ ॥

पुत्रादीन् समीपतः प्रतिषेधयेत् नात्रागन्तव्यमिति ॥ ३४ ॥

नियोगात्तु प्राश्नीयात्स्वस्त्ययन इति ॥ ३५ ॥

हुतशेषं पशोर्नियोगान्नियमेन प्राश्नीयात् स्वस्त्ययन इति कृत्वा । अतो ज्ञायते निषेध एकीयः पक्ष इति ॥ ३५ ॥

अधुनास्य कर्मणः फलमाह ।

**स एष शूलगवो धन्यो लोक्यः पुण्यः पुत्र्यः पशव्य आयुष्यो यशस्यः ॥ ३६ ॥**

शूलगवेनेष्टवतो धनलोकपुण्यपुत्रपश्वायुर्यशांसि भवन्तीत्यर्थः ॥ ३६ ॥

**इष्ट्वान्यमुत्सृजेत् ॥ ३७ ॥**

एवं शूलगवेनेष्ट्वा अन्यं पशुं श्रेष्ठं स्वस्ययूथस्येत्यादिलक्षणयुक्तं अभिषिच्योत्सृजेत् पुनः शूलगवकरणार्थं ॥ ३७ ॥

**नानुत्सृष्टः स्यात् ॥ ३८ ॥**

सर्वथा अनुत्सृष्टो नैव स्यात्। शूलगवार्थं सकृदुत्सर्गोऽवश्यङ्कार्यः। शूलगवः सकृदवश्यङ्कार्यमित्यर्थः। एवं च कृत्वा नित्यकर्मेदमिति ज्ञायते ॥ ३८ ॥

**नह्यपशुर्भवतीति विज्ञायते ॥ ३९ ॥**

नह्यपशुर्भवति पशुगुणकं कर्म पशुः। शूलगवनामकेन पशुकर्मणा रहितो न भवेदित्यर्थः। यत एवं श्रूयते तस्मात्सकृदुत्सर्गोऽवश्यङ्कार्यः ॥ ३९ ॥

शन्तातीयं जपन् गृहानियात् ॥ ४० ॥

शूलगवं समाप्य ग्रामं प्रविश्य ततः प्रागुक्तं शन्तातीयं जपन् गृहानियात् गच्छेत् प्रविशेदित्यर्थः ॥ ४० ॥

अथ नैमित्तिकं कर्माह।

पशूनामुपताप एतमेव देवं मध्ये गोष्ठस्य यजेत ॥ ॥ ४१ ॥

पशूनामात्मीयानां यदा उपतपो व्याधिरभूत्तदा एतमेव देवं द्वादशनामकं षट् नामकं एकनामकं वेत्यर्थः। तं मध्ये गोष्ठस्य यजेत् ॥ ४१ ॥

तत्र द्रव्यमाह।

स्थालीपाकं सर्वहुतं ॥ ४२ ॥

आज्यभागान्तं कृत्वा उपस्तीर्य दर्व्यांस्थालीपाकं सर्वं निधाय प्रत्यभिघार्य जुहुयादेवं सर्वहुतं कुर्यात्। अत्र प्रधानहविषः शेषाभावात् स्विष्टकृन्न कार्यः। दिगुपस्थानं कार्यमित्युक्तं ततः सर्वप्रायश्चित्तादिसमापयेत् ॥ ४२ ॥

बर्हिराज्यञ्चानुप्रहृत्य धूमतो गा आनयेत् ॥ ४३ ॥

ततो बर्हिषः आज्यञ्च चशब्दात्तुषान् फलीकरणांश्चाग्रावत्प्रहृत्य प्रतिधूमञ्चा आनयेत् ॥ ४ ३ ॥

**शन्तातीयं जपन् पशूनां मध्यमियान्मध्यमियात् ॥ ॥ ४४ ॥**

ततः शन्तातीयं जपन् पशूनां मध्यमियाद्गच्छेत् प्रविशेदित्यर्थः। अन्ये तु शन्तातिशब्दवन्ति सूक्तानि शन्तातीयशब्देनोच्यन्ते इति व्याचख्युः। कानि तानि। इडे द्यावापृथिवी इदं ह्नूनमेषां उत देवा अवहितमित्येतानि शन्न इन्द्राग्नी इतीदं शन्तातीयमिति प्रसिद्धमित्युक्तमस्माभिः प्राक्। अध्यायान्तलक्षणार्थं द्विर्वचनं॥ ४ ४ ॥

**नमः शौनकाय नमः शौनकायः ॥ ४५ ॥ ॥ ६ ॥**

शौनकनमस्कारः तत्प्रसादेनेदं गृह्यशास्त्रमस्माभिः प्रणीतं तच्च समाप्तमिति ज्ञापनार्थं।

आश्वलायनकं गृह्यमित्थं वै विवृत्तं मया ॥
सद्भिः सारन्तु वै ग्राह्यमसारं त्यजतामिति ॥ ४ ५ ॥

इति चतुर्थे नवमी कण्डिका ॥ ०॥

इत्याश्वलायनगृह्यसूत्रवृत्तौ नारायणीयायां चतुर्थोऽध्यायः

अथ बह्वृचाचार्यान्तरमतेन सपिण्डीकरणप्रयोगं वक्ष्यामः सौकर्यार्थं। तत्तु संवत्सरे पूर्णे द्वादशाहे वा कार्यं। तत्र नियमेन द्वौ ब्राह्मणौ दैवे पितृकृत्ये तु त्रय इतरत्सर्वं पार्वणवत्। विशेषमात्रं वक्ष्यामः। तत्र चत्वार्यर्घ्यपात्राणि। एकं प्रेतस्य। त्रीणि पितृपितामहप्रपितामहानां। तत्र चतुर्ष्वपि दर्भानन्तर्धाय चतुर्ष्वप्यपो निषिच्य चत्वारि सकृदनुमन्त्र्य प्रेतपात्रे तूष्णीं तिलान् प्रक्षिप्य ततो मन्त्रेण त्रिषु पात्रेषु क्षिपति। मन्त्रावृत्तिरुक्ता। ततो गन्धमाल्यैश्चत्वार्यपि पात्राणि अर्चयित्वा ततः प्रथमं पात्रं इतरेषु पित्रादिपात्रेषु त्रिषु निनयति समानीव इत्यृचा। ततोऽर्घ्यनिवेदनादि पार्वणवत्। अत्र स्थालीपाको नास्तीति कृत्वा भोजनार्थादन्नादुद्धृत्य घृताक्तं कृत्वाऽग्नौ कुर्यात् पाणिषु वा पूर्वोक्तेन विधिना जुहुयात्। ततो हुतशेषं पितृभ्यः पाणिषु ददाति अग्निहोमपक्षे पाणिहोमपक्षे च समानमिदं। अन्नं पाणितले दत्तमिति पूर्वप्राशननिषेधो द्रष्टव्यः पिण्डनिर्वपणकाले प्रेतोद्देशेन एकं पिण्डं तूष्णीं दत्वा पित्रादि त्रिभ्यः पार्वणवद्दत्वा प्रेतपिण्डं त्रिधा विभज्य त्रिषु पिण्डेषु निदध्यात्। मधुमतीभिः मधुवाता इति तिसृभिः सङ्गच्छध्वमिति द्वाभ्यां च। ततोनुमन्त्रणादिमर्वं पार्वणवत्। ॐ स्वस्त्यस्त्विति ब्राह्मणान्विसर्जयेत्। एवं चतुर्थस्य प्रपितामहस्य विच्छेदो भवति। स्त्रिया अप्येवमेव सपिण्डीकरणं। तस्यास्तु मातृपितामहीप्रपितामहीभिः सपिण्डीकरणं। एवं सति चतुर्थ्याः प्रपितामह्याः पिण्डविच्छेदो भवति। अनपत्यानान्तु प्रेतानां सपिण्डीकरणं नास्ति। अन्यस्यापि यस्य सपिण्डीकरणं कार्यं यस्य न कार्यं येन कर्त्रा कार्यं

येश्च सह पिण्डदानं कार्यं तत्सर्वं स्मृतितोऽवगन्तव्यं। एवमाचार्यान्तरमतेन प्रयोगः। सुखार्थमिदं अत्र व्याख्यातं॥

आश्वलायनगृह्यस्य भाष्यं भगवता कृतं।
देवस्वामि समाख्येन विस्तीर्णं तत्प्रसादतः॥ १॥
दिवाकरद्विजवर्य्य सूनुना नैध्रुवेण वै॥
नारायणेन विप्रेण कृतेयं वृत्तिरीदृशी॥ २॥

गृह्यवृत्तिः समाप्ताः॥

श्रीपरमेश्वर्यै नमः॥ॐ॥

---

PRINTED BY C. B. LEWIS, BAPTIST MISSION PRESS.

# गृह्यसूत्रपरिशिष्टभागः।

प्रथमोऽध्यायः।



गृह्ये तु यानि चोक्तानि क्वचिद्वैतानिकेऽपि वा।
विधेर्ल्लोपनार्थाय तानि वक्ष्याम्यतः परं॥

अथास्मिन्नाश्वलायनगृह्ये यानि कानिचिदन्योक्तानीहेच्छता नाचार्य्येणानुमतानि ज्ञापितानि यानि चोक्तप्रदर्शितक्रियाणि, तानि सर्वावबोधाय यथावदभिधास्यामः।

कर्त्ता स्नातो धौतानार्द्रवासा यज्ञोपवीत्याचान्तः प्राङ्मुख आसीनो दक्षिणाङ्गकारी समाहितो मन्त्रान्ते कर्म कुर्वीत प्रत्यृचोक्तिरृगन्तेष्वनादेश आज्यं द्रव्यं स्रुवः करणमवदानवत्सु दर्व्वीपाणिः कठिनेषु कर्मावृत्तौ मन्त्रोऽप्यावर्त्तते *कर्मणोऽन्त आचमनञ्चेति सामान्यं॥१॥

अथ सन्ध्यामुपासीतेत्याचार्य्यो यावद्धोरात्रयोः सन्धौ यश्च पूर्वाह्णापराह्णयोस्तत्कालभवा देवता सन्ध्या तामुपासीत। बहिर्ग्रामात् प्राच्यामुदीच्यां वान्यस्यां दिश्यनिन्दितायामनल्पमुदकाशयमेत्य प्रातः शुचि-

* कर्म्माङ्गाचमनञ्चेति इति का०, पु०, पाठः। कर्म्मान्त इति सो० पु०।

भूतः पाणिपादमुखानि प्रक्षाल्य शुचौ देशे भूमिष्ठ-
पादोनपाश्रित उपविष्टः शिखां बद्धाचामेत्, प्रकृति-
स्थमफेनाबुद्बुदमुदकमीक्षितं दक्षिणेन पाणिनादाय
कनिष्ठाङ्गुष्ठौ विश्लिष्टौ वितत्य तिस्र इतराङ्गुलीः संह-
तोर्द्धाः कृत्वा ब्राह्मेण तीर्थेन हृदयप्रापि त्रिः पीत्वा
पाणिं प्रक्षाल्य स्पृष्टाम्भः साङ्गुष्ठमूलेनाकुञ्चितोष्ठमास्यं
द्विः प्रमृज्य सकृच्च संहतमध्यमाङ्गुलीभिः पाणिं
प्रक्षाल्य सव्यं पाणिं पादौ शिरश्चाभ्युक्ष्य स्पृष्टाम्भः
संहतमध्यमाङ्गुलित्रयाग्रेणास्यमुपस्पृश्य साङ्गुष्ठया प्र-
देशिन्या घ्राणबिलद्वयमनामिकया चक्षुःश्रोत्रे कनि-
ष्ठिकया च नाभिं तलेन हृदयं सर्वाभिरङ्गुलीभिः
शिरस्तदग्रैरंसौ चोपस्पृशेदित्येतदाचमनं। एवं द्वि-
राचम्यात्मानमभ्युक्ष्य ततो दन्ताञ्छोधयित्वा पुन-
र्द्विराचम्य दर्भपवित्रपाणिः प्रथममममन्त्रकं पञ्चदश-
मात्रिकं प्राणायामत्रयं कृत्वा समन्त्रकं सकृत् कुर्या-
दायतप्राणः सप्रणवां सप्तव्याहृतिकां सावित्रीं स-
शिरसां त्रिरावर्त्तयेदित्येष समन्त्रः प्राणायामः ॥ २ ॥

अथ कर्म सङ्कल्प्य शुचौ पात्रे सव्ये पाणौ वाप
आधाय स्थिरे तूदकाशये यावति कर्म कुर्वीत
तावत उदकस्य विभागं कल्पयित्वा तीर्थानि तत्रा-
वाह्य ता अपः सदर्भपाणिनादायोत्तानशिरसि मार्ज-

येदों पूर्वं पच्छ आपो हिष्ठेति तिसृभिरथाचमनं, उदकमादाय सूर्यश्चेति पिबेत्। सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्तां यद्राव्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्न्या रात्रिस्तदवलुम्पतु यत्किञ्चिद्दुरितं मयीदमहं मामम्रतयोनैा सूर्ये ज्योतिषि जुहोमि स्वाहेत्येतत्स-मन्त्रमाचमनमथ पुनराचम्य मार्जयेत्प्रणवव्याहृति-सावित्रीभिर्ऋक्श आपो हिष्ठेति सूक्तेन गायत्री-शिरसा चाम्भसात्मानं परिषिञ्चेदेतन्मार्जनं ॥ ३ ॥

अथ गोकर्णवत्कृतेन पाणिनोदकमादाय नासि-काग्रे धारयन् कृष्णघोरपुरुषाकृतिं पाप्मानमात्मान-मन्तर्व्याप्य स्थितं विचिन्त्य संयतप्राणोऽघमर्षणसूक्तं द्रुपदामृचं चावर्त्य दक्षिणेन नाशाबिलेन शनैः प्राणं रेचयन् सर्वतस्तेन संहृत्य कृष्णं रेचनवर्त्मना पाणिस्थ उदके पतितं ध्यात्वा तदुदकमनवेक्षमाणो वामतो भुवि तीव्राघातेन क्षिप्त्वा तं पाप्मानं वज्र-हतं सहस्रधा दलितं भावयेदेष पाप्मव्यपोहः। एन-मेके न कुर्वन्ति मार्जनेनैव तस्य व्यपोहितत्वादिति। द्रुपदादिव मुमुचान स्विन्नः स्नातो मलादिव पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः। इतीयं द्रुपदा ऋक् पापशोधनी ॥ ४ ॥

अथाचम्य दर्भपाणिः पूर्णमुदकाञ्जलिमुद्धृत्यादित्याभिमुखः स्थित्वा प्रणवव्याहृतिपूर्वया सावित्र्या त्रिर्निवेदयन्नुत्क्षिपेद्वे पुनः पाप्मव्यपोहं नेच्छन्ति न आचम्यैवार्घ्यमुत्क्षिपेयुरेतद्देवार्घ्यनिवेदनमसावादित्यो ब्रह्मेति प्रदक्षिणं परियन् परिषिच्याप उपस्पृश्य शुचौ देशे दर्भाम्भसोक्षिते दर्भानास्तीर्य व्याहृतिभिरुपविश्य प्राणायामत्रयं कृत्वात्मानं व्याहृतिभिरभ्युक्ष्य सावित्र्या दैवतमनुस्मृत्यार्षादिकं वा तामेतां चतुरक्षरशो विभक्तां अन्तर्याजितैः षड्भिस्तदङ्गमन्त्रैर्यथाक्रममात्मनि विन्यस्यात्मानं तद्रूपं भावयेद्यथा तत्सवितुर्हृदयाय नम इति हृदये, वरेण्यं शिरसे स्वाहेति शिरसि, भर्गो देव शिखायै वषडिति शिखायां, स्यधीमहि कवचाय हुमिति उरसि, धियो यो नो नेत्रत्रयाय वौषट् नेत्रललाटदेशेषु विन्यस्याथ प्रचोदयादस्त्राय फडिति करतलयोरस्त्रं प्राच्यादिषु दशसु दिक्षु विन्यसेदेषोऽङ्गन्यासः। एनमेके नेच्छन्ति,- स हि विधिरवैदिक इत्यर्थमनुसन्दधानः। मन्त्रदेवतां ध्यात्वागच्छ वरदे देवीत्यावाह्य तिष्ठन्नष्टेषु नक्षत्रेषामण्डलदर्शनान्मन्त्रार्थमनुसन्दधानः, सन्ध्यानं नेच्छन्त्येके। प्रणवव्याहृतिपूर्विकां सावित्रीं जपेत्, जपं चाक्षसूत्रेणानामिकाया मध्यादारभ्य

प्रदक्षिणं दशभिरङ्गुलीपर्वभिर्वा गणयेदागच्छ वरदे देवि जप्येमे सन्निधा भव । गायन्तं त्रायसे यस्माद्गायत्री त्वं ततः स्मृतेत्यावाहनमन्त्रः । सवितुर्देवस्य वरणीयं तेजो ध्यायेम हि योऽस्माकं कर्मणि प्रेरयतीति मन्त्रार्थः ॥ ५ ॥

अथ देवताध्यानं । या सन्ध्योक्ता सैव मन्त्रदेवता खलूपास्यते, तां सर्वदैकरूपां ध्यायेदनुसन्ध्यमन्यान्यरूपां वा, यदैकरूपामृग्यजुःसामत्रिपदां तिर्यगूर्द्धाधरदिक्षु षट्कुक्षिं पञ्चशिरसमग्निमुखीं विष्णुहृदयां ब्रह्मशिरस्कां रुद्रशिखां दण्डकमण्डल्वक्षसूत्राभयाङ्कचतुर्भुजां शुभ्रवर्णां शुभ्राम्बरानुलेपनस्रगाभरणां शरच्चन्द्रसहस्रप्रभां सर्वदेवमयीमिमां देवीं गायत्रीमेकामेव तिसृषु सन्ध्यासु ध्यायेदथ यदि भिन्नरूपां तां प्रातर्बालां बालादित्यमण्डलमध्यस्थां रक्तवर्णां रक्ताम्बरानुलेपनस्रगाभरणां चतुर्वक्त्रां दण्डकमण्डल्वक्षसूत्राभयाङ्कचतुर्भुजां हंसासनारूढां ब्रह्मदैवत्यामृग्वेदमुदाहरन्तीं भूर्लोकाधिष्ठात्रीं गायत्रीं नाम देवतां ध्यायेदथ मध्यन्दिने तां युवतीं युवादित्यमण्डलमध्यस्थां श्वेतवर्णां श्वेताम्बरानुलेपनस्रगाभरणां पञ्चवक्त्रां प्रतिवक्त्रं त्रिनेत्रां चन्द्रशेखरां त्रिशूलखड्गखट्वाङ्गडमरुकाङ्कचतुर्भुजां वृषभासनारूढां रुद्र-

दैवत्यां यजुर्वेदमुदाहरन्तीं भुवर्लोकाधिष्ठात्रीं सावित्रीं नाम देवतां ध्यायेदथ सायं तां वृद्धां वृद्धादित्यमण्डलमध्यस्थां श्यामवर्णां श्यामाम्बरानुलेपनस्रगाभरणामेकवक्त्रां शङ्खचक्रगदापद्माङ्कचतुर्भुजां गरुडासनारूढां विष्णुदैवत्यां सामवेदमुदाहरन्तीं स्वर्लोकाधिष्ठात्रीं सरस्वतीं नाम देवतां ध्यायेद्ध्यानं नेच्छन्त्येके। तत आवाह्य जपित्वा जातवेदसे सुनवाम सोम, तच्छंयोरावृणीमहे नमो ब्रह्मणे नमो अस्त्वग्नय इत्येताभिरुपस्थाय प्रदक्षिणं दिशः साधिपां नत्वाथ सन्ध्यायै गायत्र्यै सावित्र्यै सरस्वत्यै सर्वाभ्यो देवताभ्यश्च नमस्कृत्य तत उत्तमे शिखरे देवि भूम्यां पर्वतमूर्द्धनि। ब्राह्मणैरभ्यनुज्ञाता गच्छ देवि यथासुखमिति सन्ध्यां विसृज्य भद्रं नो अपि वातय मन इत्युक्त्वा शान्तिञ्च चिरुच्चार्य नमो ब्रह्मण इति प्रदक्षिणं परिक्रमन्नासत्यलोकादापातालादालोकालोकपर्वताद्ये सन्ति ब्राह्मणा देवास्तेभ्यो नित्यं नमो नम इति नमस्कृत्य भूमिमुपसंगृह्य गुरून् वृद्धांश्चोपसङ्गृह्णीयादेवं। सायं विशेषास्तु सूर्यश्चेति मन्त्रे सूर्यस्थानेऽग्निपदमावपेद्रात्र्याह्ना रात्रिरहः सत्ये ज्योतिषीत्यन्ते ब्रूयाज्जपश्चार्द्धास्तमिते मण्डले आनक्षत्रदर्शनादासीनेनेति॥६।

अथ मध्यन्दिने आपः पुनन्त्विति मन्त्राचमनमाप

पुनन्तु पृथिवीं पृथिवी पूता पुनातु मां। पुनन्तु ब्रह्मणस्पतिर्ब्रह्म पूता पुनातु मां। यदुच्छिष्टमभोज्यं च यद्वा दुश्चरितं मम। सर्वं पुनन्तु मामापोऽसताञ्च प्रतिग्रहं स्वाहेत्यथाकृष्णीयया हंसवत्या वा त्रिः सकृद्वार्घ्यमुत्क्षिप्योर्ध्वबाहुरुन्मुख उदुत्यं जातवेदसं चित्रं देवानामिति सूक्ताभ्यामाभ्यां वा मन्त्राभ्यां तच्चक्षुरित्येकया वादित्यमुपस्थाय जपं प्राङ्मुख आसीनो यथेष्टकालं कुर्यादित्येष सन्ध्याविधिर्व्याख्यातः॥ ७॥

अथास्य मन्त्राणामृषिदैवतच्छन्दांसि, प्रणवस्य ब्रह्मा परमात्मा देवी गायत्री, व्याहृतीनां सप्तानां विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवशिष्ठकश्यपाः प्रजापतिर्वा सर्वासामग्निवाय्वादित्यबृहस्पतिवरुणेन्द्रविश्वेदेवागायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यस्तिसृणामाद्यानां समस्तानां वा देवता प्रजापतिर्बृहती सावित्र्या विश्वामित्रः सविता गायत्रीशिरसः प्रजापतिर्ब्रह्माग्निवाय्वादित्या न यजुषि च्छन्दः। आपो हि ष्ठेति सिन्धुद्वीप अम्बरीषो वापं गायत्रं ह्यनुष्टुबन्तं पञ्चमी वर्द्धमाना सप्तमी प्रतिष्ठा अन्त्ये द्वे सूर्यश्च ब्रह्मा सूर्यमन्यु मन्युपतयः प्रकृतिरापः पुनन्तु विष्णुरापो हिष्ठा अग्निश्च रुद्रोऽग्निमन्यु मन्युपतयः प्रकृतिः ऋतं च माधुच्छन्दसोऽघमर्षणो भाववृत्तमानुष्टुभं जातवेदसे कश्यपो जात-

वेदा अग्निस्त्रिष्टुप तच्छंयोः शंयुर्विश्वेदेवाः शक्करी, नमो ब्रह्मणे प्रजापतिर्विश्वेदेवा जगती, आकृष्णेन हिरण्यस्तूपः सविता त्रिष्टुप् हंसः शुचिषद्वामदेवः सूर्यो जगत्युदुत्यं प्रस्कण्वः सूर्यो गायत्रमन्त्याश्चतस्रो-ऽनुष्टुभश्चित्रं देवानामिति कुत्सः सूर्यस्त्रिष्टुप् तच्चक्षु-र्वसिष्ठः सूर्यः पुरउष्णिक् दैवतस्मरणमेव वा कुर्य्याद्दे-वमन्यच्च व्याख्यातं ॥ ८ ॥

अथ स्नानविधिस्तत्प्रातर्मध्याह्ने च गृहस्थः कुर्या-देकतरच्च वा प्रातरेव ब्रह्मचारी यतिस्त्रिषु सवनेषु द्विः त्रिर्वा वानप्रस्थस्तत् प्रातः सहगोमयेन कुर्यान्मृ-दा मध्यन्दिने सायं शुद्धाभिरद्भिर्न प्रातः स्नानात् प्राक सन्ध्यामुपासीत प्रातरुत्सृष्टं गोमयमन्तरिक्षस्थं सङ्गृह्य भूमिष्ठं वोपर्यधश्च संत्यक्तं तीर्थमेत्य धौतपादपाणि-मुख आचम्य सन्ध्योक्तवदात्माभ्युक्षणादि च कृत्वा द्विराचम्य दर्भपाणिः संयतप्राणः कर्म सङ्कल्प्य गो-मयं वीक्षितमादाय सव्ये पाणौ कृत्वा व्याहृतिभि-स्त्रेधा विभज्य दक्षिणं भागं प्रणवेन दिक्षु विक्षिप्यो-त्तरोत्तरं तीर्थे क्षिप्त्वा मध्यमं मानस्तोक इत्यृचाभि-मन्त्र्य गन्धद्वारामित्यनया मूर्द्धादिसर्वाङ्गमालिप्य प्राञ्जलिर्वरुणं हिरण्यशृङ्गमिति द्वाभ्यामवतेहेड इति द्वाभ्यां प्रसम्राजे बृहदर्चेति सूक्तेन प्रार्थ्य हिरण्यशृ

वरुणं प्रपद्ये तीर्थं मे देहि याचितः। यन्मया भुक्तम-
साधूनां पापेभ्यश्च प्रतिग्रहः। यन्मे मनसा वाचा कर्मणा
वा दुष्कृतं कृतं। तन्न इन्द्रो वरुणो बृहस्पतिः सविता
च पुनन्तु पुनः पुनरित्यथ याः प्रवतो निवत उद्वत
इत्येतया तीर्थमभिमृश्यावगाह्य स्नातो द्विराचम्य मा-
र्जयेदंवयोयन्त्यध्वभिरित्यष्टाभिरापोहिष्ठेति च नव-
भिरथ तीर्थमङ्गुष्ठेनेमं मे गङ्ग इत्यृचा त्रिःप्रदक्षिणमा-
लोड्य प्रकाशपृष्ठमग्नौ अघमर्षणसूक्तं त्रिरावर्त्य निम-
ज्योन्मज्यादित्यमालोक्य द्वादशकृत्व आप्लुत्य पाणिभ्यां
शङ्खमुद्रया योनिमुद्रया वोदकमादाय मूर्ध्नि मुखे वा-
ह्वोरुरसि चात्मानङ्गायत्र्याभिषिच्य त्वन्नो अग्ने वरु-
णस्य विद्वानिति द्वाभ्यान्तरत्समन्दीधावतीति च सूक्तेन
पुनः स्नायान्मूर्ध्नि चाभिषिञ्चेत्तद्विष्णोः परमम्पदमग्ने
रक्षाणो अंहसो यत्किञ्चेदं वरुणदैव्ये जने इत्येता ज-
पेत्, स्रोतोभिमुखः सरित्सु स्नायादन्यत्रादित्याभिमु-
खोऽथ साक्षताभिरद्भिः प्राङ्मुख उपवीती देवतीर्थेन व्या-
हृतिभिर्व्यस्तसमस्ताभिर्ब्रह्मादीन्देवान् सकृत्सकृत्त-
र्पयित्वाथोदङ्मुखः निवीती सयवाभिरद्भिः प्राजापत्येन
तीर्थेन कृष्णद्वैपायनादीन् ऋषींस्ताभिर्व्याहृतिभिर्द्वि-
र्द्विस्तर्पयित्वाथ दक्षिणाभिमुखः प्राचीनावीती पितृ-
तीर्थेन सतिलभारिद्भिर्व्याहृतिभिरेव सोमः पितृमान्

यमो अङ्गिरस्तानग्निस्वात्ताः कव्यवाहन इत्यादौ स्त्रौं स्त्रौं तर्पयेदेतत्स्नानाङ्गतर्पणमथ तीरमेत्य दक्षिणाभिमुखः प्राचीनावीती ये के चास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकमिति वस्त्रं निष्पीड्य यज्ञोपवीत्यप उपस्पृश्य परिधानीयमभ्युक्ष्य परिधाय द्वितीयञ्चोत्तरीयं पर्युक्षितं प्रावृत्य द्विराचामेद्यथोक्तसन्ध्यामुपासीतेदं प्रातस्स्नानविधानं॥ ९ ॥

अथ मध्यन्दिने तीर्थमेत्य धौतपाणिपादमुखो द्विराचम्यायतप्राणः स्नानं सङ्कल्प्य दर्भपवित्रपाणिः शुचौ देशे खनित्रेण भूमिङ्गायत्र्यस्त्रेण खात्वोपरिमृदश्चतुरङ्गुलमुद्वास्याधस्तान्मृदं तथा खात्वा गायत्र्यादाय गर्तमुद्वासितया मृदा परिपूर्य मृदमुपात्तां शुचौ देशे तीरे निधाय गायत्र्या प्रोक्ष्य तच्छिरसा त्रेधा विभज्यैकेन मूर्ध्न आनाभेरपरेण चाधस्तादङ्गमनुलिप्यापस्वाप्लुत्य क्षालयित्वादित्यन्निरीक्ष्य तं ध्यायन् स्नायादेतन्मलस्नानमाहुरथ तीरे द्विराचम्य तृतीयमस्त्रेणादाय सव्ये पाणौ कृत्वा व्याहृतिभिस्त्रेधा विभज्य दक्षिणभागमस्त्रेण दिक्षु दशसु विनिक्षिप्योत्तरन्तीर्थे क्षिप्त्वा तृतीयङ्गायत्र्याभिमन्त्रितमादित्याय दर्शयित्वा तेन मूर्ध्न आपादात् गायत्र्या प्रणवेन वा सर्वाङ्गम-

नुलिप्य सुमित्रान आप ओषधयः सन्त्विति सकृद्-
द्भिरात्मानमभिषिंच्य दुर्मित्र्यास्तस्मै सन्तु योऽस्मा-
न्द्वेष्टि यञ्च वयन्द्विष्म इति मृत्क्षेपमद्भिः क्षालयेदथ
वरुणप्रार्थना तर्पणान्तेनोक्तेन विधिना स्नायान्नास्मि-
न प्राक ब्रह्मयज्ञतर्पणाद्वस्त्रं निष्पीडयेदपुत्रादयो
ह्यन्ते तर्प्या इत्येष स्नानविधिस्तदेतदसम्भवेऽद्भिरेव
कुर्याद्भौमदिनादिषु च, न च गृहे मृदा स्नायान्न च
शीतोदकेन शीतोष्णोदकेन गृहे स्नायान्मन्त्रविधिं
वर्जयेद्वहिर्वा शुचौ देशे सर्वं पश्चात्कुर्यादिति ॥ १० ॥

अथाशक्तस्य मन्त्रस्नानं शुचौ देशे शुचिराचान्तः
प्राणानायम्य दर्भपाणिः सव्ये पाणावपः कृत्वा ति-
सृभिरापो हिष्ठीयाभिः पछः प्रणवपूर्वं दर्भोदकै-
र्मार्जयेत् । पादयो र्मूर्ध्नि हृदये मूर्ध्नि हृदये पाद-
योर्हृदये पादयो र्मूर्ध्नि चाथार्धर्चशो मूर्ध्नि हृदये पा-
दयोर्हृदये पादयो र्मूर्ध्नि चाथ ऋकशो हृदये पादयो
र्मूर्ध्नि चाथ तृचेन मूर्ध्नीति मार्जयित्वा गायत्र्या दश-
धाभिमन्त्रिता आपः प्रणवेन पीत्वा द्विराचामेदेतन्म-
न्त्रस्नानं ॥ ११ ॥

अथ वैश्वदेवो दिनस्य प्रारम्भोनाच पाकयज्ञत-
न्त्रमग्निमौपासनं पचनं वा परिसमूह्य पर्युक्ष्यायतन-
मलंकृत्य सिद्धं हविष्यमधिश्रित्याद्भिः प्रोक्ष्योदगुद्वा-

स्याग्नेः प्रत्यक् दर्भेषु निधाय सर्पिषाभ्यज्य सव्यं पाणितलं हृदये न्यस्य सकृद्वदानेन पाणिना जुहुयात् सोमाय वनस्पतय इत्येकाहुतिं दिवाचारिभ्यो विश्वेभ्यो देवेभ्य इति सर्वभूतानां विशेषणं प्रजापतेरुक्तिरिष्यते प्रधानबलेरुदक् पुरुषबलिस्तदिदमन्नाभावे तण्डुलादिभिः कुर्यादेके चान्ते च परिसमुह्य पर्युक्षेदेकेनाच तन्त्रमिति पर्यूहनोक्षणे अपि न कुर्वन्ति केवलं हुत्वोपतिष्ठन्ते विश्वेदेवाः सर्वे देवास्तद्दैवत्यमितीदं वैश्वदेवं ॥ १२ ॥

अथ स्वस्तिवाचनमृद्धिपूर्तेषु स्वस्त्ययनं वाचयेदित्याचार्यः ऋद्धिर्विवाहान्ता अपत्यसंस्काराः प्रतिष्ठोद्यापने पूर्तं तत्कर्मण आद्यन्तयोः कुर्याच्छुचिः स्वलङ्कृतो वाचयीत तथाभूते सद्मनि मङ्गलसम्भारभृतियुग्मान् ब्राह्मणान् प्रशस्तानाचारलक्षणसम्पन्नानर्घ्यादिभिरभ्यर्च्य दक्षिणया तोषयेदथ प्राङ्मुखाः प्रशस्ता दर्भपाणयस्तिष्ठेयुस्तद्दक्षिणतो वाचयितोदङ्मुखः संस्कार्यो वाचयितु र्दक्षिणपार्श्वमातिष्ठेयुरथ वाचयिता दर्भपाणिरपां पूर्णमुदकुम्भं स्वर्चितं सपल्लवमुखं धृत्वा तिष्ठन् समाहितो मनः समाधीयतामिति ब्राह्मणान् ब्रूयात्समाहितमनसस्म इति ते ब्रूयुः प्रसीदन्तु भवन्त इति वाचयिता प्रसन्नास्म इती-

तरेऽथ ते सर्वे संहृत्य शान्तिः पुष्टिः तुष्टि र्वृद्धिरविघ्न-मायुष्यमारोग्यं शिवं कर्म कर्मसमृद्धिर्धर्मसमृद्धिः पुत्रसमृद्धि र्वेदसमृद्धिः शास्त्रसमृद्धिर्धनधान्यसमृद्धि-रिष्टसमृद्धिरित्येतानि पञ्चदशतन्त्रान्युक्तानि तन्नाम्ना कर्मदेवतां प्रीयतामिति ब्रूयुरथ वाचयिता पूर्ववत्त-ल्लिङ्गमन्त्रान् पठित्वा त्रिस्त्रिर्मन्दमध्योच्चस्वरैरों पुण्याहं भवन्तो ब्रुवन्तु स्वस्ति भवन्तो ब्रुवन्तु ऋद्धिं भवन्तो ब्रुवन्त्विति ब्रूयात्तेऽपि तथा प्रत्येकं प्रतिब्रूयुरों मित्यृध्यतामित्यृद्धौ प्रतिब्रूयुरथ प्राङ्मुखमासीनं सा-मात्यङ्कर्तारं ब्राह्मणाः सपल्लवदर्भपाणयः प्रत्यङ्मुखा-स्तिष्ठेयुः शान्तिपवित्रलिङ्गाभिः ऋग्भिरभिषिंचेयुः पुरन्ध्र्यानीराजनादि कुर्युः ॥ १३ ॥

अथ होमधर्मं किञ्चिदुच्छ्रितासमाऽक्रान्तिमा भू-मिस्थण्डिलमुच्यते तदिषुमात्रावरं सर्वतो गोमयेन प्रदक्षिणमुपलिप्य यज्ञियशकलं मूलेनोल्लिख्य शकलं प्रागग्रन्निधाय स्थण्डिलमभ्युक्ष्य शकलमाग्नेय्यां निर-स्याप उपस्पृशेत् एष आयतनसंस्कारस्तत्राग्निं व्याहृ-तिभिरभ्यात्मानं प्रतिष्ठाप्यान्वादधाति कर्म सङ्कल्पपु-रःसरं द्रव्यदेवताग्रहणाय द्वयोस्तिसृणां वा समिध-मभ्याधानमन्वाधानमथेध्माबर्हिषी सन्नह्य दर्भैः प्रादे-शमात्रैस्त्रिसन्धी त्रिवृतो रज्जू कुर्यात्पाणिभ्यां रूथ्योत्त-

राभ्यां पूर्वं वर्तयेत्ततो दक्षिणोत्तराभ्यामन्ते प्रदक्षिणावृतं रज्जुं कुर्यादेतद्रज्जुकरणं, प्रथमां रज्जुमुदगग्रामास्तीर्य प्रादेशमात्रं दर्भमुष्टिं छित्वा प्रागग्रान्तस्यान्निधाय तया बर्हिर्द्विरावेष्टयित्वा तन्मूलञ्च द्विरावेष्ट्य तां प्रथमवेष्टनस्याधस्तादुन्नयेदेवं द्वितीययेध्मं सकृदावेष्ट्य सन्नह्येदरन्त्यायाम इध्मः पञ्चदशदारुकस्तदुपरि निदध्यादेतदिध्माबर्हिषोः सन्नहनमथ सोदकेन पाणिना प्रागुदीच्या आरभ्य प्रदक्षिणमग्निन्त्रिः परिसमूह्य प्रादेशमात्रैर्दर्भैः प्रदक्षिणं प्राच्यादिषु प्रतिदिशमुदक्संस्थं परिस्तृणीयाद्दक्षिणोत्तरयोः सन्धिषु मूलाग्रैराच्छादयेत् राघिष्ठान्वा दर्भांस्तयोस्तृणीयादुत्तरतः पात्रासादनाय दक्षिणतो ब्रह्मासनाय कांश्चिद्दर्भानास्तीर्याग्निं पर्युक्षेदेषोऽग्निसंस्कारोऽथ तेषु दर्भेषु पात्राणि न्यग्बिलानि द्वंद्वं प्रागग्रमुदगपवर्गं प्रयुनक्ति प्रोक्षणपात्रस्रुवौ चमसाज्यपात्रे इध्माबर्हिषीत्याज्यहोमेषु तथा चरुस्थालीप्रोक्षणपात्रे दर्वीस्रुवौ चमसाज्यपात्रे इध्माबर्हिषी चेति दर्विहोमेषु प्रोक्षणपात्रमुद्धृत्य पवित्रमन्तर्धायाप आसिच्य तूष्णीं ताः पवित्राभ्यान्त्रिरुत्पूय पात्राण्युत्तानानि कृत्वेध्मं विस्रस्य पात्राणि ताभिरद्भिर्युगपत् त्रिः प्रोक्षेदेतत्पात्रासादनं ॥ १४ ॥

अथ चमसं प्रत्यगग्नेर्निधाय ते पवित्रेऽन्तर्धायाद्भिः पूरयित्वा गन्धादिं प्रक्षिप्य दक्षिणोत्तराभ्यां पाणिभ्यां नासिकान्तमुद्धृत्योत्तरतोऽग्नेर्दर्भेषु निधाय दर्भैः प्रच्छादयेदेतत्प्रणीताप्रणयनमथ ते एव पवित्रे प्रागग्नेः आज्यपात्रेऽन्तर्धायाज्यमासिच्य वर्हिः परिस्तरणादङ्गारानुदगपोह्य तेष्वाज्यमधिश्रित्योल्मुकेनावज्वाल्य दर्भाग्रे प्रछिद्य प्रोक्ष्याग्नौ प्रास्य ज्वलता तेनैवोल्मुकेनाज्यन्त्रिः परिहृत्योल्मुकन्निरस्याप उपस्पृश्याज्यङ्कर्षन्निवोदगुद्वास्याङ्गारानतिसृज्याज्यमुत्पूय पवित्रे प्रोक्ष्याग्नौ प्रास्याप उपस्पृशेदेष आज्यसंस्कारोऽथ वर्हिरात्मनोऽग्रे प्रागग्रमास्तीर्य तत्राञ्जमामाद्य सहृदर्भैर्दर्वींस्रुवावादायाग्नौ प्रताप्य दर्वीं निधाय स्रुवं सव्येन धारयन्दक्षिणेन पाणिना दर्भाग्रैर्विलं प्रागारभ्य प्राद्क्षिण्यं प्रागपवर्गन्त्रिः परिमृज्य तैरेव विलपृष्टमभ्यात्मन्त्रिः संमृज्याथ पृष्ठादारभ्य यावदुपरिविलन्दण्डं दर्भमूलैस्त्रिः संमृज्य स्रुवं प्रोक्ष्य प्रताप्योदगाज्याद्वर्हिष्यासाद्योदकस्पृष्टैस्तैरेव दर्भैरेवं दर्वीं च संस्कृत्य स्रुवादुदङ्निधाय दर्भाः प्रोक्ष्याग्नौ प्रहरेदेषस्रुक्स्रुवसंमार्गः॥ १५॥

अथ ब्रह्मास्तिचेत् क्रियेत, स प्राक प्रणीताप्रणयनात्समस्तपाण्यङ्गुष्ठो भूत्वाग्रेणाग्निं परीत्य दक्षिणत-

आस्तीर्णेषु दर्भेषु निरस्तः परावसुरिति तृणमङ्गुष्ठोपकनिष्ठाभ्यां नैर्ऋत्यान्निरस्याप उपस्पृश्येदमहमर्वावसोः सदने सीदामीत्युदङ्मुख उपविश्य बृहस्पति र्ब्रह्मा ब्रह्मसदनं आशिष्यते बृहस्पते यज्ञङ्गोपायेति मन्त्रं ब्रह्मा जपेदपां प्रणयने ब्रह्मन्नपः प्रणेष्यामीत्यतिसृष्टः ॐ भूर्भुवः स्वर्बृहस्पति प्रसूत इति जपित्वा प्रणयेत्यतिसृजेत्सर्वदा च यज्ञमना भवेदेके नेच्छन्ति निरसनमुपवेशनं जपः प्रायश्चित्तहोमः संस्थाजपेनोपस्थानञ्चेति पञ्चकर्माणि ब्रह्मणः ॥ १६ ॥

अथ पार्वणस्थालीपाकस्तस्य पौर्णमास्यामारम्भोऽग्निमग्नीषोमौ पौर्णमास्यान्देवते अग्निरिन्द्राग्नी चामावास्यायां देवते अपः प्रणीय शूर्पे व्रीहीन्निरूप्य प्रोक्ष्य प्रागग्रीवमुत्तरलोमकृष्णाजिनमास्तीर्य तत्रोलूखलं निधाय तानवहत्य तण्डुलांस्त्रिः फलीकृतांस्त्रिः प्रक्षाल्य श्रपयेद्यदि सहश्रपयेच्चरुं विहृत्येदममुष्मा इदममुष्मा इत्यभिमृशेत्स्विष्टकृतं द्विरुपरिष्टादभिघारयेत् पञ्चावती द्यावती पुरस्तादवद्येदिध्मर्ज्जु विस्रंस्याग्नौ प्रास्यायाश्चाग्नेस्यतो देवा इदं विष्णुरित्यन्ताभिर्व्याहृतिभिश्च जुहुयादेताः सर्वाः प्रायश्चित्ताहुतयः एता ब्रह्मणा कर्तव्याः परीत्य प्रत्यगुदीच्यामवस्थाय जुहुयादथ बर्हिषि पूर्णपात्रं निनीय ताभि

रङ्गिरापो अस्मान्मातरः शुन्धयन्त्विदमापः प्रवहते-
त्येताभ्यां सुमित्रा न आप ओषधयः सन्त्वित्येतेन
चात्मानं शिरसि मार्जयेत्संस्कार्यमपि संस्कारकर्मस्व-
थाग्निमेऽस्व म इति संस्थाजपेनोपतिष्ठते ततो ब्रह्मा
चाथ कर्ताग्नेः परिसमूहनपर्युक्षणे कुर्यादेतत्तन्त्रमन्ये-
षामस्थालीपाकवत् सुकृतकर्ममन्त्रान् जुहुयात् ॥ १७ ॥

अथ नित्यमौपासनन्तस्य सायमारम्भोऽनस्तमित
आदित्ये सायमग्नेः प्रादुष्करणमनुदिते प्रातः प्रदो-
षान्तः सायं होमकालः सङ्गवान्तः प्रातर्नोच तन्त्र-
मिष्यतेऽग्निं परिसमूह्य परिस्तीर्य पर्युक्ष्य हौम्यमपक्व-
मुल्मुकेनावज्वाल्य तेनैव त्रिः परिहृत्योल्मुकन्निरस्येत्
पक्वमुदगङ्गारेष्वधिश्रित्य प्रोक्ष्योदगुद्वास्य तानङ्गारान-
तिसृजेदेष होम्यसंस्कारः, पयोदधिसर्पिर्यवागूरोदन-
स्तण्डुलाः सोमस्तैलमापो व्रीहयो यवास्तिला इति
हौम्यानि, तण्डुला नीवारश्यामाकयावनाला व्रीहि-
शालियवगोधूमप्रियङ्गवः स्वरूपेणातिहोम्याः स्ति-
लास्वरूपेणैव शतञ्चतुःषष्टिर्वाहुतिः व्रीहियवाना-
न्तदर्धन्तिलानान्तदर्धं सर्पिस्तैलं च तिलञ्च तिला-
तसीकुसुम्भानां येन प्रथमामेतां जुहुयात्तेनैव द्वि-
तीयां जुहुयाद्येनैव सायं जुहुयात्तेनैव प्रातः सायं
प्रातर्होमौ सायं वा समस्येन्नतु प्रातः सायं होमौ ॥ १८ ॥

अथ पुनराधानमनुगतेऽग्निं श्रिष्टागारादानीयो-क्तवदुपसमाधाय परिसमुह्य परिस्तीर्य पर्युक्ष्याज्य-मुत्पूयायाश्चाग्न इत्येकामाज्याहुतिं हुत्वा यथापूर्वं प-रिचरेदेवमाद्वादशरात्रादत ऊर्ध्वं विवाहगृहप्रवेश-होमाभ्यामेकतन्त्राभ्यामादध्यात् तत्र विवाहाज्या-हुतयो लाजाहुतयो गृहप्रवेशाज्याहुतयो हृदयाञ्ज-नञ्च भवति कर्तैव लाजानावपत्येतत्पुनराधाननित्य-होममतीत्य मनस्वत्या चतुर्गृहीतं जुहुयादाद्वादश-रात्रादूर्ध्वं पुनराधानमेव कुर्यात् ॥ १९ ॥

अथानेकभार्यस्य यदि पूर्वगृह्याग्नावेवानन्तरो वि-वाहः स्यात्तेनैव सा तस्य सह प्रथमया धर्माग्निभागिनी भवति, यदि तु लौकिके परिणये तं पृथक्त्वेन परि-गृह्य पूर्वेणैकीकुर्यात्तौ पृथगुपसमाधाय पूर्वस्मिन् पूर्व-या पत्न्यान्वारब्धोऽग्निमीळे पुरोहितमिति सूक्तेन प्रत्यृ-चं हुत्वोपस्थायायन्ते योनि र्ऋत्विय इति तं समि-धमारोप्य प्रत्यवरोहेति द्वितीये वरो ह्याज्यभा-गान्तं कृत्वोभाभ्यामन्वारब्धोऽग्निमीळे जुहुयादग्नि-नाग्निः समिध्यते त्वं ह्यग्ने अग्निना पाहि नो अग्न एकयेति तिसृभिरस्तीदमधिमन्थनमिति च तिसृभिरथैनं परिचरेन्मृतामनेन संस्कृत्यान्यया पुनरादध्यादथ वाग्निं विभज्य तद्भागेन संस्कु-

यांदत्त्वीनामप्येवमेवाभियोजनं कुर्याद्गोमिथुनं दक्षिणा ॥ २० ॥

अथ कन्यावरणं कन्यां परिणेष्यमाणो द्वौ चत्वारोऽष्टौ वरपितुराप्तान् प्रशस्ताकारकर्म्मणो नृक्षरा ऋजवः सन्तु पन्था इति प्रहिणुयात्तेतावतीभिः पुरन्ध्रीभिः सहितामङ्गलगीततुर्याभ्याङ्कन्यागृहमेत्य शुभे पीठासने प्राङ्मुखासीनाया दातृज्ञातिबान्धवोपेतायाः कन्यायाः पाणौ फलं प्रदाय कन्यावरणकाले वृणोरन्नासीनाः प्रत्यङ्मुखा वसिष्ठगोत्रोद्भवायामुष्य प्रपौत्रायामुष्य पौत्रायामुष्य पुत्राय श्रुतशीलनाम्ने वराय वत्सगोत्रोद्भवाममुष्य प्रपौत्रीममुष्य पौत्रीममुष्य पुत्रीं सुशीलानाम्नीं इमाङ्कन्याम्भार्यात्वाय वृणीमह इति ब्रूयुरथ दाता भार्याज्ञातिबन्धुसमेतो यथोक्तमनूद्य वृणीध्वमिति ब्रूयादेवं त्रिः प्रयुज्य दाता प्रदास्यामीति चोच्चैस्त्रिर्ब्रूयादथ ब्राह्मणा उक्तस्वस्त्ययनाः शिवा आपः सन्तु सौमनस्य मस्त्वक्षतं चारिष्टं चास्तु दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्त्वित्युक्तेतद्वः सत्यमस्त्विति अनूद्य समानीव आकूतिः प्रसुग्मन्ताधियः सानस्य सक्षणीत्येताः पठेयुः पुरन्ध्र्यः कन्यायै कल्याणान् कुलधर्माचारान् कुर्युः ॥ २१ ॥

अथोपयमनं लक्षण्यो वरो लक्षणवतीं कन्यां यवीयसीमसपिण्डामसगोत्रजामविरुद्धसम्बन्धामुपयच्छेत्पितृतः सप्तपुरुषं सापिण्ड्यम्मातृतः पञ्चपुरुषं भृगुवत्साङ्गिरसश्च प्रवरे च एकर्षियोगे सगोत्रा एकर्षियोग इतरे दम्पत्योर्मिथः पितृमातृसाम्यविरुद्धः सम्बन्धो यथा भार्यास्वसुर्दुहिता पितृव्यपत्न्याः स्वसा चेति केचिन्मातृगोत्रतां च वर्जयित्वा तदपत्यमसगोत्रं स्यादिति सुस्नातोऽलङ्कृतो वरः स्वस्तिं वाचयित्वा सहितः स्वर्चितैः ब्राह्मणैः पुरन्ध्रीभि र्ज्ञातिबान्धवैः पदातिभिर्मङ्गलगीततूर्यघोषाभ्यां सम्बन्धिनो गृहमेत्य चतुष्पदे सोत्तरच्छदे हरितदर्भास्तीर्णे भद्रपीठे प्राङ्मुख उपवेश्य तस्य पुरस्तात् प्रत्यङ्मुखीं भद्रपीठासीनां सुस्नातामलंकृतामहतवाससं स्रग्विणीं कन्यां पुरस्कृत्य दाता सामात्य उपविशेद्वरं विधिवदभ्यर्चयेदथ दक्षिणतः पुरोधा उदङ्मुख उपविश्य मध्ये प्रागग्रोदगग्रान्दर्भानास्तीर्य तैजसमपां पूर्णं कलशन्निधाय व्रीहियवानोप्य गन्धादिभिरलङ्कृत्य दूर्वापल्लवै र्मुखमवस्तीर्यापलिङ्गाभि र्ऋग्भिरभिमन्त्र्य ताभिरद्भिः प्रयोजयेदथ दाता पुण्याहादीनि वाचयित्वा शिवा आपः सन्तु सौमनस्यमस्त्वक्षतञ्चारिष्टञ्चास्तु दीर्घमायुरस्तु शान्तिः पुष्टि-

स्तुष्टिश्चास्तु तिथिकरणमुहूर्तनक्षत्रसम्पदस्त्वित्युक्ता भार्यादिसमेतः कन्यां प्रतिगृह्य वत्सगोत्रोत्पन्नाममुष्य प्रपौत्रीममुष्य पौत्रीममुष्य पुत्रीं सुशीलानाम्नीमिमां कन्यां वसिष्ठगोत्रोद्भवायामुष्य प्रपौत्रायामुष्य पौत्रायामुष्य पुत्राय श्रुतशीलनाम्नेऽस्मै वराय सम्प्रददे कन्यां प्रतिगृह्णातु भवानिति ब्रुवन वरस्य पाणौ हिरण्यमुपधाय कलशोदकधारामासिञ्चेत् मनसा प्रजापतिः प्रीयतामिति ब्रूयादथ शिरसि पुन्याहाशिषो वाचयित्वा दक्षिणेऽसे कन्यामभिमृश्य क इदङ्कस्मा अदात्कामः कामायादात्कामो दाता कामः प्रतिग्रहीता कामं समुद्रमाविश कामेन त्वा प्रतिगृह्णामि कामैतत्ते वृष्टिरसि द्यौस्त्वाददातु पृथिवी प्रतिगृह्णात्विति जपित्वा प्रजापतिमनुस्मृत्य धर्मप्रजासिध्यर्थं कन्यां प्रतिगृह्णामीति ब्रूयादेवं त्रिः प्रयुज्य पुरोधा दातृवरौ प्रति ऋतस्य हि शुरुधः सन्ति पूर्वीरिति तिस्रो जपित्वैतद्वः सत्यसमृद्धमस्त्विति ब्रूयात् ॥ २२ ॥

अथानयोर्निरीक्षणं स्वलङ्कृते वेश्मनि मङ्गलगीततूर्यनिर्घोषे पूर्वापरावरान्युंछितौ हस्तान्तरालौ शुक्लतण्डुलराशी कृत्वा मध्ये स्वस्तिकान्तिरस्कारिणीं धारयेयुरथ पूर्वस्मिन्राशौ प्रत्यङ्मुखीं गुडजीरकपाणिं

कन्यां स्थापयेयुरपरस्मिन् प्राङ्मुखं तथाभूतं वरं तौ मनसेष्टदेवतां ध्यायन्तौ तिष्ठन्तौ ब्राह्मणाः सूर्यं सूक्तं पठेयुः पुरन्ध्र्यो मङ्गलगीतानि कुर्युरथ ज्योतिर्विदादिष्टे काले प्रविष्टे सद्यस्तिरस्करिणीमुदगपसार्य कन्यावरौ परस्परगुडजीरकानवकिरतः परस्परन्निरीक्षेयातामभ्रातृघ्नीमिति तामीक्षमाणो जपत्यघोरचक्षुरपतिघ्न्येधीति तथेक्ष्यमाणोथास्याभ्रुवोर्मध्यन्दर्भाग्रेण परिमृज्य दर्भन्निरस्याप उपस्पृशेदथाब्राह्मणा बान्धवाः पुरन्ध्र्यस्तौ आशीर्भिरभिनन्दयेयुः ॥ २३ ॥

अथानयोरार्द्राक्षतारोपणन्तैजसेन पात्रेण क्षीरमानीय घृतमासिच्यान्येनार्द्राक्षततण्डुलानथ तथास्थितयो र्वधूवरयोर्वर्धनकमेतत्कारयेयुरमृतं क्षीरमायुर्घृतमरिष्टरक्षता अप एतेषामारोपणमिष्यते वरः प्रक्षालितपाणिर्वध्वाः प्रक्षालितेऽञ्जलौ क्षीरघृतं पाणिना द्विरुपस्तीर्य द्विस्तण्डुलानञ्जलिना वपति यथा पूर्यंत ततो द्विरुपरिष्टादभिघारयत्येवं वराञ्जलावन्यस्तण्डुलापूरणङ्कुर्याद्दाता तयोरञ्जल्योर्हिरण्यमवदध्यात्यथ वरः कन्याञ्जलौ स्वाञ्जलिन्धारयेद्दाता कन्यां धारयतु दक्षिणाः पान्तु बहुधेयञ्चास्तु पुण्यं वर्धतां शान्तिः पुष्टिस्तुष्टिश्चास्तु तिथिकरणमुहूर्तनक्षत्रसम्प-

दत्त्वित्युक्त्वा कन्यामुत्क्षिप्य तदञ्जल्यक्षतान्वरमूर्धा-
रोपयेद्वरोऽपि तन्मूर्ध्नि स्वाञ्जल्यक्षतानारोपयेदेवन्त्रि-
र्वधू पूर्वं वराञ्जलौ वधूस्तण्डुलपूरणं कुर्यात्तदञ्ज-
लावन्योन्य समारोपणं कारयेदिदानीं दाता व-
राय गोभूमिदासीयानशयनमन्नादिकमनुदानन्दद्या-
दथ पुरोधाः कांस्ये पय आसिच्योडुम्बर्याद्रयाशा-
खया सपलाशया सहिरण्यपवित्रया सदूर्वापवि-
त्रयाभिषिञ्चेल्लिङ्गाभि र्ऋग्भिरथ वधूवरौ स्वश्वे-
तपुष्पं क्षीरघृतेनाप्लाव्य परस्परतिलकङ्कुरुतः कण्ठे
स्रजञ्चामुञ्चतः कौतुकसूत्रञ्च करे बध्नीयातामथ
पुरोधास्तयोरुत्तरीयान्तयोः पञ्चपूगफलानि विवाह-
व्रतरक्षिणङ्गणाधिपमनुस्मृत्य गणानान्त्वा गणपतिं
हवामह इत्यादृन इन्द्रक्षुमन्तमिति च वधूवरयोरु-
त्तरीयान्तौ च नीललोहितं भवतीति बध्नीयादथ
दाता सभार्या वृद्धाः पुरन्ध्र्यो ज्ञातिबान्धवाश्च क्रमादा-
शीभिरार्द्राक्षतारोपणं कुर्युः ॥ २४ ॥

अथर्तुमत्याः प्राजापत्यमृतौ प्रथमे अनुकूलेऽह-
नि सुस्नातयान्वारब्ध प्राजापत्यस्य स्थालीपाकस्य हु-
त्वैता आज्याहुती र्जुहुयाद्विष्णुर्योनिमिति तिस्रो ने-
जमेषेति तिस्रः प्रजापतेन त्वदित्येकाथातो मूर्धपनः
शोशुच दघमित्यभिमृश्य याः फलिनीर्या अफला

इति जपित्वा वधेनदस्युं प्रहिचातयस्वेति षड्भिरग्निस्तुवे स्ववस्तममिति द्वाभ्यामग्निमुपस्थाय सूर्यो नो दिवस्पात्विति सूक्तेनादित्यमुपतिष्ठेत। अथ गर्भलभनमृतावनुकूलायान्निशि स्वलङ्कृते सुगन्धवासिते वेश्मनि तथाभूते पर्यङ्कशयने सुस्नातामलङ्कृतां शुक्लवसनां स्रग्विणीम्भार्यां स्वयन्तथाभूतः प्रवेश्य दूर्वां पिष्ट्वा अश्वगन्धां वा सूक्ष्मेण वाससा सङ्गृह्योदीर्ष्वातः पतिवतीति द्वाभ्यां स्वाहाकारान्ताभ्यामुभयोर्नासाबिलयोर्निषिच्य सम्वेश्य गन्धर्वस्य विश्वावसोर्मुखमसीत्युपस्थमभिमृश्य विष्णुर्योनिङ्कल्पयत्विति द्वाभ्यां विहृत्य यो गर्भमोषधीनामहङ्गर्भमदधामोषधीष्विति जपित्वोपगच्छेत्प्राणेते रेतो दधाम्यसावित्यनुप्राण्याद्यथा भूमिरग्निगर्भा यथा द्यौरिन्द्रेण गर्भिणी वायुर्यथा दिशाङ्गर्भ एवन्ते गर्भन्दधाम्यसाविति हृदयमभिमृशेन्नेक उपगमने मन्त्रविधिमिच्छन्ति नह्यनेन किञ्चित् संस्क्रियत इति त ओषधीभिर्निषेकं कृत्वोपगच्छन्ति॥ २५॥

अथ जातकर्म पुत्रे जाते पुरान्यैरालम्भादग्निरिन्द्रः प्रजापति विश्वे देवा ब्रह्मेत्यनादेशदेवता हुत्वा प्राक् स्विष्टकृतः सर्पिर्मधुप्राशनादि कुर्यादेवन्निष्क्रमणं चतुर्थे मास्यापूर्यमाणपक्षे स्वस्ति वाचयित्वा स्विष्टकृतः प्राक् सुस्नातालंकृतं कुमारमादाय सहभार्या-

# BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE SUPERINTENDENCE OF THE

ASIATIC SOCIETY OF BENGAL,

New Series, Nos. 102, 132, 143 and 161

---

THE

# GRIHYA SU'TRA OF A'SWALA'YANA,

WITH THE

COMMENTARY OF GA'RGYA NA'RA'YANA,

EDITED BY

RA'MANA'RA'YANA VIDYA'RATNA,

AND

ANANDACHANDRA VEDA'NTAVA'GI'SA.

CALCUTTA:

PRINTED BY C. B. LEWIS, BAPTIST MISSION PRESS.

1869

# गृह्यसूत्राणि ।

## आश्वलायनप्रणीतानि ।

### गार्ग्यनारायणीयवृत्तिसहितानि ।

---

रामनारायण-विद्यारत्नेन

तथा

श्री आनन्दचन्द्र-वेदान्तवागीशेन च

परिशोधितानि ।

---

कलिकाताराजधान्यां

वाप्टिष्टमिशनयन्त्रे

सि, वि, लुइस साहेवेन मुद्रितानि

संवत् १९२४ । खीः १८६९ ।

# विज्ञापनम्।

---

अत्रत्यासियातिकाख्यसमाजाधिपतीनामनुज्ञयैतेषां नारायणीय-वृत्तिसहितानामाश्वलायनप्रणीतानां गृह्यसूत्राणां तृतीयाध्यायस्य नवमकण्डिकापर्य्यन्त-ग्रन्थस्य शोधनकार्य्यं समाप्य लोकान्तरं गते रामनारायण-विद्यारत्ने तत्सभाध्यक्षमण्डलादनुमतिं लब्ध्वा मयाऽवशिष्टग्रन्थभागं बहुयत्नेन यथामति संशोध्यैतद्ग्रन्थस्य मुद्राकार्य्यं समापितं। किन्तूक्तविद्यारत्नेन संशोधनार्थं पाठभेदप्रदर्शनार्थञ्च यान्यष्टौ पुस्तकान्याहृतानि न तानि सर्व्वाणि मद्धस्तगतानि। नास्य संशोधनकाले यत्र सन्देहो जातस्तत्रोक्तसभासम्पादकेन सहृदयेन श्रीमता राजेन्द्रलालमित्रेण सार्द्धं परामृश्य तत्र विमीमांसितं। अतोऽपि यदि कुत्रचित् त्रुटिरनुभूयते तेनाहं क्षन्तुमर्ह इति॥

कलिकाता ब्राह्मसमाज। श्री आनन्दचन्द्र शर्म्मणः।

---

यानि पुस्तकान्यवलम्ब्यैतस्मिन् पाठभेदं प्रकाशीकृतं तथैतत् संशोधितञ्च तेषां सङ्केतनाम्नां स्फुटीकरणम्।

---

टीकापु० ........टीकापुस्तकं—अत्र टीकामात्रं वर्त्तते।

आदर्शपु०........आदर्शपुस्तकं—अत्र मूलं टीका चोभे वर्त्तेते

मू० पु०..........मूलपुस्तकं—अत्र केवलं मूलं वर्त्तते।

सं०पु०..........संस्कृतपाठगृहादानीतपुस्तकं।

सो० पु० ....... आस्यातिकसोसाइटीगृहादानीतपुस्तकं।

सो०२ पु०........तद्गृहादानीतं द्वितीयपुस्तकं।

वा० पु० ........वाराणसीत आनीतपुस्तकं।

मु० पु०..........मुद्रितपुस्तकं—अत्र मूलमात्रं वर्त्तते।

